79. इत्युक्त्या झटिति प्रत्युत्पन्न विज्ञाना गृहदीपिकारोपणेन सकृदवगत पदार्थ सञ्चयेव स्मृतजन्मान्तरानुभूत मुकुन्द सह क्रीडा कलापा बभूव । तस्यास्तदा——

80. आयतनेत्रसञ्जनितवारिसकज्जलमाश्रित श्रवो
गोलकमन्तिकालकलता अपुषत्पुलकाञ्चिता तनूः ।
पुष्पितवल्लरीव सुमबाणहृतेव मनोजवेदना
विश्लथगात्रयष्टिरबला विवशा लघुमूर्छिताभवत् ।।

81. सारसनेत्रया ननु कियद्रचितं बत जोषमेव ज
न्मान्तरवर्तनस्मरण सञ्जननादणुमेव केवलम् ।
अद्रिमकार्ष्मं निर्घृणतयेत्यवलामसिचन्त कूपिको
द्वान्तसतालवृन्तमृदुवात हिमाम्बु कणालिभिर्मुहुः ।।

82. लब्धस्पृहोन्मीलित लोचना च
भूयो मुकुन्द स्मरणेन नेत्रे ।
निमील्य बाष्पोद्गमभिन्नपक्ष्मा
दृष्ट्वा सखीरेवमुवाच गोदा ।।

83. यूयं का इति कान्ते ! भुजङ्ग कन्या वयं समायाताः ।
पूर्वंमितो धरणी मिति जरादुस्ता आलिलिङ्ग सोवा च ।।

84. तत्तादृग्दनुजान्तकस्य दयिता भूत्वा पुरास्मिन्कलौ
जातैतादृशविप्रयोगदहनज्वालास्सहेऽहं कथम् ।
कन्यादानविधेः परस्य तु करे प्राग्योगशङ्कया तनु
त्यक्तवैनां कमलाक्षपादकमलद्वन्द्व पुनस्त्वाश्रये ।।

85. भवितस्सैब यथा प्रियविरहानलतापमसहमाना द्राक् ।
त्यजति प्राणान् दयिता तदन्यदखिल तु वैशिकं नूनम् ।।

86. इत्युक्तास्ता ऊचुः क्व गतोऽसौ नन्दनन्दनो ? रङ्गे ।
विलसति कुतस्त्वरा ? तं पतिमाप्तुमिहस्थ केशवं भजतात् ।।

87. मा भैषीरिति बोधिता तदनु सा शश्वत्सखी भाषितै
र्जातैरान्तरशुद्धिभिस्तदनुगैश्चिन्ता तमोभिर्युता ।
सा निर्मण्डनकार्श्यतो हृदि सदा मुक्ताफलैरन्तरा
नीलैस्सग्रथितेन निर्मलतनूर्हारेण रेजे तमाम् ।।

88. कलहाय दर्शिते सुमबाणे सततं सितासित निशानाम् ।
श्रेणिर्निर्णिद्रायाः गृहगतशललायिता तस्याः ।।

89. सुमबाणासनशासनेन वनिताधैर्याख्यवप्रं नवो
न्मिषिताहर्मुखयन्त्रचोदनकृती थेत्तुं क्रमेणाक्षिपत् ।
मृदुमार्तण्डमरीचिदीपकलिकाज्वालासु दग्ध्वा दल
द्दलपाथोरुह लोहनाल कुहरोद्यच्चञ्चरीकोपलान् ।।

90. उल्लो च कौ सुम्भधरस्तुषार
धारागृहाङ्गी घटयन्त्रमालाम् ।
आवर्तयंस्तद्धृति भङ्गकाङ्क्षी
मध्याह्नमन्त्री जपति स्म जाप्यम् ।।

91. सायं सन्ध्या प्लवङ्गी स्थविररविमुखी मल्लिकाकोशदंष्ट्रा
फुल्लत्कह्लार धूली तनुरपि च मधुद्योत तारा विलासा ।
आकाशानोकहाग्रप्लवन पटुतरा दीनचक्राङ्गपोता
चिन्ता निद्रान्तराले व्यथयति नितरां विश्णुचितियकन्याम् ।।

92. सा पुण्डरीकाक्षनिविष्टचित्ता
सदा वियोगामय तप्तदेहा ।

मुकुन्दहस्ताम्बुरुहं जिघृक्षुः
स्थानीयराधारमणं सिषेवे ॥

93. प्रत्यहमुत्थाय सा प्रभाते मौन
धारिणी पुरतस्सखीचयेषु
गच्छत्सु सौवर्ण पात्रेषु संगृह्य
पीतामलक्यादि चूर्णकानि
उद्गमनीयानि देहशोधनकानि
गत्वा च निष्कुटान्तरपथेन ।
दिव्यप्रबन्धयुगास्या कृतप्लवा
दीर्घिकापूतशीतल जलेषु
काञ्चनीलेशपूर्ण सौभाग्यदाङ्ग
धूतिशोभासु बालसूर्यातपेन
स्पर्धमानासु सन्दृब्ध दीर्घकुन्त
लाग्रभागार्द्रतामपनुद्य वपुषि ॥

94. धृत्वा सिन्धुरपीनकुम्भयुगले सिन्दूरवद्रञ्जितं
चेलं तुङ्ग कटी तटे सुरदना कूष्माण्डबीजोपमम् ।
फाले पाण्डुरमृत्स्नया च तिलक सुस्निग्धकेशोद्गम
द्गन्धा कृष्णमदद्विरेफ निचया निर्याति युक्तालिभिः ॥

95. तरुपरिणतोरुकदली सुमञ्जरी हल्लक सुममालां च ।
धृत्वोदकुम्भवसनान्यनुजग्मुस्तां सखी सख्यः ॥

96. देवल विजनीकृतदेवालयमेत्य प्रणम्य वेद्युपरि ।
सा रङ्ग वल्लिकाभिर्नानावर्णैरलञ्चकार तलम् ॥

97. कपिलाज्यदीप कलिकां प्रज्वाल्य च हल्लकस्रजं विष्णोः ।
उरसि द्वयेन निदधौ चागुरुधूपं निवेद्य फलजातम् ॥

98. खण्डितपूगीनागरखण्डैरपि चन्द्रखण्डैश्च ।
मिलितं ताम्बूलं श्रीहरये भक्त्या न्यवेदयद्गोदा ॥

99. प्रदक्षिणीकृत्य च गर्भ गेहं
मौलौ गृहीत्वा शठकोपमीषत् ।
नता मुकुन्दाङ्घ्रि सरोजतीर्थं
माल्यञ्च धृत्वा समुपैति गेहम् ॥

100. प्रतिदिनमेवं गत्वा मुकुन्दपदपूजनं कृत्वा ।
अच्युतवियोगतापच्युतधैर्या गायति स्म शौरिगुणान् ॥

101. ततः –

## वसन्तर्तवर्णनम

102. आमुक्तमाल्यदा या मदनातपभानुना तप्ता ।
दग्धा पुनर्मया स्यादित्याशां दक्षिणां जहौ तरणिः ॥

103. तत्कान्ताघनदीर्घदुस्सहतरायोगाग्निसन्तप्तदि
क्संयोगात्तशरीरतापशमनार्थं भास्करो दक्षिणाम् ।
त्यक्त्वा नूनमुपैति शीनसलिल प्रालेयभूमीधर
प्रस्थप्रस्रवणाम्बुशीकरचयै रोमाञ्चिताशा रविः ॥

104. युक्तमभिषेणने मीनकेतनस्य
मीनदर्शन मेषमेषः किमैति ?

इति तु मा पृच्छ पान्थ कान्तावियोग
वह्निना तस्य वाहोऽपि नूनमैति ।।

105. हेमन्ते वनिता लिहन्ति रसनाग्रेणाधरोष्ठं प्रिय
क्रोडीकारगभीरता शिथिलतामाप्नोति चैत्रागमे ।

इत्यत्यन्तभिया समागतवति प्रोज्झन्ति तल्लेहनं
युक्तं चापि तदेव कष्टसमये धैर्येण भाव्यं किल ।।

106. उच्छिष्टं रदनच्छदस्य जगृहे छी छी त्यनुक्त्वा मधोः
उच्छिष्टं शिशिरेऽधरे व्रणभिया लिम्पन्ति कान्ता मधुः ।

तन्नैच्यं वनिताजनस्य दयया दूरीचकारेति ता
वासन्तो[1]लपशाखिदोहदचयान्, स्मृत्वाकृतं, कुर्वते ।।

107. आदौ चान्द्रबलोल्बणस्य सुमनोरोपस्य कार्तान्तदि
ग्वाताङ्कूररथस्य पान्थवनिता प्राणानिलोच्छेदने ।

उद्युक्तस्य पुनर्भवेद्यदि सहस्रांशोश्च साहाय्यकं
किं ब्रूमो ननु मारकस्य तनुते साह्यं विधिस्सर्वदा ।।

108. मलयकटकोटजस्थित
कलशीसुतसेवया तदाशास्थः ।

अनिलोऽलसोऽपि मिहिका
जलनिधिमापोशनीकरोद्गुरुवत् ।।

109. मलयतरूनिव भूजा
नन्यानपि गन्धिलान्कर्तुम् ।

1. वीरुत् ।

इव कुसुमवतस्तनुते
मलयाशासमुपयातपवमानः ।।

110. फुल्लन्माधवसूनमारुतयुते यामे निशान्ते हठा
च्चोली दूरमपास्य पीवरकुचद्वन्द्वेन गाढं पतिम् ।
आलिङ्ग्य क्रमशो निदाघजननाशङ्काकुला योषित
प्रोत्क्षिप्त प्रतिसीर मुज्झितहसन्त्यश्शेरते वल्लभैः ।।

111. हेमन्तर्तु निशाप्रहीणबलतिग्माशुस्तदास्तङ्गतः
पश्चान्माधवकाल्यकालजनितश्श्यामाकुचालेपगाम् ।
स्वा सान्द्राग्निशिखारुणां रुचिमितो जग्राह गुप्ता पुरा
कालज्ञानिपतत्रि कूजित मुदैत्तेनाङ्गनामानदम् ।।

112. मृगमदमपास्य गन्धाः
मुक्ताहारांश्च पीनकुचयुगले ।
ह्री[1]बेरतृणं माला-
स्बैच्छन् कान्ता वसन्त दिवसेषु ।।

113. कश्चाऽहि वक्त्रगरलेन कटुस्तदीय
नागाङ्गना धर सुधामधुर स्समीरः ।
स्तम्भी चकार दलपाटनतो वनीजान्
नूत्नैश्च पल्सवचयै स्समलञ्चकार ।।

114. पाटीराचल शीतमारुत शिशुः प्राचीकटन्मान्मथ
स्वीयस्यन्दनतां वराटक निशाभङ्ग प्रभा भासुरैः ।

1. बर्हिष्ठंः

पक्वानोकह वल्लरी विगलितैः पत्राभिधैश्चीत्कृति
कुर्वद्भिः परिवर्ति काञ्चनशताङ्गाङ्गैर्मनोमोहनैः ॥

115. ततः—

116. क्ष्मावशारक्तराङ्कव मरण्यमधूत्थ
रागो लता सर्पजिह्विका च
तरुगरुन्मद्गरुत्सञ्चयः कल्पिता
हार्यधाराधर लोहितं च
नवमिलिन्दावेशिका कारणाक्षताऽऽ
लिर्मालती भीतिकार्यं सृक्च ।
परभृतवायस प्रविभाग पत्रिका
निष्कुटदेवता वासितञ्च
दक्षिणाशाजगत्प्राणशाणकषण
दलविदलनोज्ज्वलमणिकलाप इव च
उद्भूवावनी जात सञ्चयेषु
नूत्नकिसलोच्चयो वसन्तागमेन ॥

117. माध्य[1]शून्य शरधिं सुमायुधं
तापसा बन जिगीषवस्तदा ।
क्रूर कृष्णनिशि वीक्ष्य चेश्वरं
पल्लवासि हति लक्ष्यतामगुः ॥

118. किशुकं सुरभि साविका करे
दारकं विरहियोषितां तदा ।
नूतनोदित लतान्तपत्रिण.
नाभिवर्धन लवित्रवद्बभौ ॥

119. कान्ताकुन्तल भूषणायित सुमैस्तुल्य न नो भाग्यमि-
त्यासन् ह्रीवनतानि किंशुकसुमान्ये त्यापि दुःखं पुनः ।
व्याकोचन्ति, न आत्मचूर्ण कलितैर्नीरै प्रियै· स्शृङ्गकै
स्सिक्तानां क्षणमङ्गरागविभवो वक्षोजयोस्स्यादिति ॥

120. सौर्याशानिलकर्षककस्सुललिताच्छामोदकल्लोलिनी
मुक्ताश्चन्दन सौर भोर्मिषु चिरं क्लिन्ना विधयाऽऽवपत् ।
हस्तावापमसौ वनीषु नगरोद्यानेषु नो चेत्तथा
सौन्दर्य सुमनोहरत्वमपि च क्व स्यात्सुमाना कदा ॥

121. तरुवल्ली घटनोज्झितमदनशिलीमुख मुखानीव ।
त्वग्भेदोपगतानि विराजन्ते काननेषु मुकुलानि ॥

122. आत्मीयोदरजात भूमिरुहसन्तानस्य ताम्रच्छवेः
दन्ताङ्कूरककुट्मलेषु शनकै स्सन्दृश्यमानेष्वसौ ।
काम माधव सङ्गमस्सुलभ इत्युद्यानलक्ष्मीर्भज
त्युल्लासं, दयितोपगूहनविधेः किं सौख्यद योषिताम् ॥

123. आदिमपादद्वयगृहीतसुमरस
प्रथम निपीय शुण्डाद्वयेन
त्यक्त्वातितिक्तमित्यन्विष्य संफुल्ल
कुसुमानि राजीमनुप्रविश्य
कुञ्ज सुमे निपतितं च कस्मिंश्चि

---

1. माघमासणाणि सुमानि 2. सूतिका

दलिमवन्या निपात्य च निपीय ।
गलितपर्णं बिलच्युतरससंसक्त मा
क्रुष्य हठात्स्वीयपदयुग च
अन्ततो लब्ध सुमरस मागल नि
पीय तस्मिस्तु गालिते मारुतेन
गलति मधुपोच्चयो वनपालि कासु
परिहृ सन्तीषु मध्वादिवासरेषु ॥

128. मरुदूढ मलयाहि गरलधूम्या गल
न्मदन रथाङ्गाञ्जन कणिकाश्च
भीतिधावच्छिशिर त्यक्तबाष्पाणि
पिकपञ्चमस्वरकृत्ततानि
अब्दागमन्मरन्दासार जम्बूनि
हिन्दोलसाक्षान्मुकुन्दकाय ।
रुचयोऽभिसारिकांशुकनीलगोलान्य
पुष्पित जाति शापाक्षराणि
चैत्रसञ्जीवनी पुनः प्राणितात्म
जन्मकारणतरुपुनर्यायिन इव
युवति धूत हसन्तिकाङ्गारशकल
सञ्चयाश्चञ्चरीका वने लसन्ति ॥

125. द्विजत्वमेत्यापि च जालिमुक्तैः
पिका निकाम मधुपैस्समेताः ।
अन्यैश्च पुष्टा मधुसेविनश्च
न स्यु. कथ पञ्चमशब्दभाजः ॥

126. सम्फुल्लत्सहकारवाजि निचयान्मारस्य शङ्काकुलो
व्यक्रीणात्स तु माधवोऽपगतभीः क्रीत्वा सुमेषुश्च तैः ।
आरेभे परिपीडनाय विरहि व्रातस्य जेताऽभव
द्दोषाः किं प्रभवन्ति माधवकृपायोगे परे दुर्भगे ।।

127. ज्यौत्स्नीधेनु चन्द्रपीनोधसाढ्या
चान्द्री दुग्धं दुग्धवान् यन्मधुस्तत् ।
फुल्लत्पुष्पोद्गीर्णमारन्दपूरैः
मिश्र द्वेधा भिन्दते भृङ्गहंसाः ।।

128. कासारस्थ सरोजनालशकल चञ्च्वा गृहीत्वा गते
हंसे वक्रवनेक्षुदण्डमनुसम्फुल्लन्तु पुन्नागकम् ।
तत्सूत्रं समभूत्तरोश्च सरसः तस्मात्तरोः प्रस्थिता
भृङ्गालिर्मधु सेवनार्थ मतनोर्द्वित्व गता शिञ्जिनी ।।

129. वाता दीर्घकडारपौष्पनिपतन्माध्वीकधारावलीः
गृह्णन्तो वलिता विसृत्वरतया ताभिभृश मन्थराः ।
प्रत्यासन्नवियोगिवार बहुलश्वासानिलै स्तापिता
वान्त्यग्रेषु तु वर्तुलाश्चुरचुरन्नादैश्च दग्धा इव ।।

130. वान्ताधस्सुमनः परागनिचयान् कांश्चिद्गृहीत्वा नगो
द्गच्छद्वर्तुलवातपोत निचयाः प्रत्यागते माधवे ।
दातुं पौष्पविभूषणानि धरणेरादातुमस्यास्स्थली
राजीवानि वनेन्दिरा शिथिलिता भूषाणयो वाबभु. ।।

131. संफुल्लान्वकुलान्विलोक्य तरुणी फूत्कारशीधुद्रवैः
किं स्यामोन तरुण्य इत्यवनिजान् कर्तु समान्पुष्पितान्

प्रोद्यत्कान्त देवतामुख पुटा नी[1]रायुतानीव वि-
भ्राजन्ते मधुपूर्णपाडुरदलन्माधूक सूनानि हि ॥

132 सफुल्लानकरोद्विना मधुरयं पीनस्तनीगाढस
श्लेषं हन्त मुधेति मारदवसन्तप्रास्तु सैरेयका. ।
धूमं षट्पदकैतवादपि रजोन्याज द्विमुञ्चन्ति त
द्भूतिं काष्ठरसं प्रफुल्लसुमनश्च्योतन्मधुच्छद्मतः ॥

133. स्पृष्ट्वा मुधा गलित पत्रफलानकुर्वन्
आम्रानिमा भ्रमरभोजन पुष्पहेतो. ।
अस्माकमन्नमहरन्निति पैकशौके
शोके क्षणै स्समवलोकयतान्तु कान्ता ॥

134. सङ्केतं समुपेत्य काचिदतुलप्रेमार्द्रचित्त धवे
हासार्थान्तिरितात्मनि स्मरहता पप्रच्छ दृष्टस्त्वया ।
किं मे नाथ इति द्रुमोत्पल मथास्मिन् पुष्पिते तत्पतौ
दृष्टे सा हसति स्म तां च सुमित. प्रान्ते नमेरुद्रुमः ॥

35. निष्टीवते फलमदात्पुरुषाय कश्चित्
स्थाणुर्विना प्रतिघ; मानन सीधु दात्र्यै ।
नन्वन्तत. सुमनसः कमलाननायै
दास्यामिवेति वकुल स्सुमितो बभूव ॥

136 मासे मधौ मदवती मुखगे मधौ च
नामेर्ष्यया प्रकटिनस्वबले; बभूव ।

---

1. इरा=सुरा ।

आद्येन पूर्वदलपातनमन्तिमेन
पुष्पोच्चयस्तु मधुलिट्सु नदत्सु कामम् ।।

137. हन्तारं चरणेन योऽनुमनुते स्मास्य प्रियाया भवे
मानुष्ये श्रिय आश्रयीभवनसम्बन्धाज्जगामेयतीम् ।
शान्ति चेन्न तथा कथं युवतिपद्धत्याप्यशोको हसेत्
किं स्यात्तत्सुदृशः परागपटली स्वर्णाभिषेकोत्सवः ।।

138. कान्तोद्यन्मुखचन्द्ररागजननादेतद्रसस्स्यात्सुधे
त्येवं गन्धफलीषु पाद युगलन्यासोन्मुखीष्षट्पदीः ।
[1]न्यासुस्ता हि, वसन्तजातसुमनैस्तुल्यं प्रसूतुल्यरू
पोद्भूतास्तु भजन्ति तद्गुणगणं शिष्टन्नु दुष्टन्नु वा ।।

139. वसन्तरागालपने कयाचित्
प्रियालुरासीत्सुमित सपत्नी ।
तद्रागतो नैवमभूत्सनाम
वसन्तशक्तयेत्यसहिष्णुराह ।।

140. प्राणिजनासामौक्तिक
मधरसुधाप्राणित च मुक्तालीः ।
प्रादादिव कस्याश्चि-
च्छवासैर्जीर्णोऽपि सिन्धुकोऽफुल्लत् ।।

141. छदरिक्तं तिलक विलोक्य तरुणी काचिद्दयार्द्रा दृशो
र्मदनन्यस्त महाम्बकानि ददती तेनेऽतिरिक्तं तु तम् ।

---

1. निरस्यन्

न तु केनापि च दोहृदेन यदियं नैवालिलिङ्गान्ततो
न च पस्पर्श तमित्यदस्स्तुतिपराभूवंस्तदीयालयः ॥

142. रसातलं सान्द्रमरन्द वृष्ट्या
पुष्पैश्च्युतैर्ज्यां गगनं परागैः ।
आक्रम्य च माधवोऽसौ
चकार वैरोचनिकोष्मशान्तिम् ॥

143. नियतित मरन्द धारा
सूच्चलितासु प्रलीनमधुलिङ्भिः ।
विटपिच्छायाचलिता =
पराह्वसमयेऽपि नैव चलितेव ॥

144. उद्यानोन्नत भूज कौसुमरजस्स्तो मैस्सिताम्भोरुह
श्वेता चैत्र निशीथिनी प्रविमल ज्योत्स्ना भवत्कच्वरा ।
नेयं कामुक कामिनी विहृरणार्हे त्याद्रिकान्तार सं
भूताः कान्तकधूलयः परिहृरन्त्यस्वच्छतां चान्द्रिकाम् ॥

145. हिम विनाशे शैत्य पाण्डिमयोर्गति
र्गोस्तनीकुञ्जश्च मञ्जरी च,
विरहिणीकार्श्ये च कङ्कणगानयो
र्मलयानिलश्च मत्तालयश्च,
जातीषु विरजासु सौरभोल्लासयो
र्गोरण्टकः कुरङ्गाङ्ककश्च,
यति नियमेच्युते वेणुदण्डजटयो
र्वनवृतिश्च प्लक्षसन्ततिश्च,

स्वभृतपरभृतविनुतरसालपरिष
दहरहः क्लृप्त वहुरह स्सङ्गमेषु
जातकामिनीग्लानेर्निवारकश्च
विकचवारिजगन्धवाहो बभूव ॥

146. फलित रसालसाल विटपौघ चरिष्णु शुकी चयाश्च त
न्मधुरस पानलुब्ध मधुपावलयो नितरां चकासति ।
मधुरशुकी वचोमृत झरीरस लोल वनीरमावधू
निगलित गृह्यका स्तदनुबन्धिधनायसशृङ्खला इव ॥

147. तुहिनभूतेशेन रन्या कृपालुना
मक्तश्च शैत्याङ्घ्रि ताडनेन
व्रतिहतिसंप्राप्तकीटतापगमेन
भृङ्गाङ्गसङ्गेन जनिमवाप्य
याम्यदिङ्मारुतप्राणितस्तदलिम
दब्जिनी कमलाक्षिणी विवृत्य ।
फुल्लचूताश्रित तच्छटयोत्थाय
मित्रमालिङ्ग्य चैत्र च नाम
सुमरजश्शाटि मार्जि तोद्दण्डवापि
कुवलनिस्सृतमधुग्तीनेत्रवाश्च
कीरचलित स्फुटाशोकरोपमङ्ग
ज' पुनस्सन्दधे कटकामुखेन ॥

148 कोकिलकामिनीकभनबम्भरवायृशुकव्रजाय स
त्पल्लवपुष्पसूनरसधूलिफलौघमसूत नन्वसौ ।
हा सुरभिस्स्वय पुरुषतां जगृहे पथिकेषु दुर्लभ
स्यात्किमुवा समस्तजनवाञ्छितदाननिविष्टचेतसाम् ॥

148. सहकारफलरसैर्माध्वीषु कामिनी
बिम्बाधरास्वादने परासु
मलयजोदरजम्भरुचिमच्छ्रुतिद्वय
भूषायितेषु कुवालयेषु
शशिकदलोदरच्छदधटीष्वाश्रित्य
याचमानासूरुकान्तिपूर ।
मापतद्भृङ्गीर्निरस्यत्सु कबरीषु
शेखरद्विकसित चम्पकासु
खाद्यगन्धापगमनार्थघुसृणकलित
करतलामृष्ट सुमनोरजश्चयेषु
सान्द्रपुष्पितवल्लरीभूरुहेषु
युवतयो यन्ति यूनो लतागृहेषु ॥

150. एवं नितान्तरमणीय वसन्तदिवसेषु सा बाला–

151. स्मयं मधोर्वारयितुं तु मेघ
रञ्जिञ्जगौ सस्तनितान् ददर्श ।
सविद्युतोब्दान् नटतो मयूरान्
फुल्लत्कदम्बांस्त्र मुमूर्छ सद्यः ॥

152. राकेन्दुभीत्या विधुकान्तशाला
सुप्तापि सा वर्धिततापतप्ता ।
निशाटमानीय गृहं नभस्थं
भृशं तपामीति जहौ निशान्तम् ॥

153. द्विरेफनाद प्रशमाय वीणां
शब्दापयन्ती श्रुतिपूष्टरक्तिम ।

श्रुत्वा तमेषा विरराम दैवे
वामे ह्युपाया विफली भवन्ति ॥

154. सन्तापमेवा जनयन्नितान्तं
तल्पं सुमानां ननु तानि तस्याः ।
पदाहतेभ्यो जनितान्यगेभ्यः
तापं विना किं जनयन्ति सौख्यम् ॥

155. चेतोजातकृशानुतापशमनायैषार्चनाकैतवा
न्मानाथं निपुणं विलिख्य विधिवल्लज्जालसैरीक्षणैः ।
अङ्गाङ्गेक्षण तत्परा हृदयमध्यासीनमाकामिनीं
दृष्ट्वेर्ष्या परितापतप्तहृदया क्लिश्नाति चोत्कम्पते ॥

156. तल्पे कैरब कल्पिते कुमुदिनी कासार तीरस्थले
लुण्ठन्त्या दयया शुकैः पर भृतैः पुण्याय दत्तं लवम् ।
प्राणानां परिरक्षयन्ति विकसन्मल्लीमिलच्चञ्चरी
कालेरा च निशावसान मुदयद्बाष्पाः श्रवः पूरकाः ॥

157. नातारयत्तां कुचकुम्भयुग्मं
वियोगसिन्धु सखिभिर्निषिक्तम् ।
जग्राह चान्तस्तुहिनाम्बु यस्मा
न्निमज्जयेदेव न तारयेत्तत् ॥

158. तापं शामयितुं कुचद्वयतटीन्यस्तं मृणालीचयं
प्रातर्दूरमपास्तमन्तिकगतो हंसो गृहीत्वापि यः ।
कायोष्मग्लपितं न मोक्तुमथवा जग्धु समर्थ तु त
वीक्ष्य स्मेरमुखीं विलोक्य तु सखी सख्योऽभवन् प्राणिताः ॥

159. गातुं माधवगीतिकाः प्रियतया स्पृष्ट्वा विपञ्चीङ्कर
स्पर्शात्काकुभ सिक्थके लघुतरं लीने तु, सालापिनीम् ।
आदायाङ्गुलिधर्मवारि तिमितां त्यक्त्वा च तां कण्ठतः
गायन्ती विरराम गद्गदरुतिश्शून्येक्षणा लोकिनी ।।

160. प्रतिकुसुमतल्पनिपतित
वलयाङ्कैस्सा विलिख्य बोधयति ।
अपगतमयि सख्यो मे
नूनं धैर्यं च मानमिति ।।

161. इत्थं वियोगदवताप लुठच्छरीरा
शश्वन्निरस्त मृदिताम्बर भूषणौघा ।
शश्वद्धृतान्यवसनाभरणा स्मरार्ति
नालं निगूहितुमसौ हृरिसेवयापि ।।

162. [1]पुत्री नाभवमेका
पुत्री चैवं विधेति तत्तातः ।
अविदितमान्मथ पत्री
व्यपत्रपोऽयं तपोविशेष इति ।।

162. चिन्तयन् दिनदिनप्रवर्धमानतनयातनुग्लान्या अत्यन्तं दुर्मनायमानः अविदिततन्निमित्तः मैवं कुर्विति पुत्रीं मुधा निवार्य, उद्वेलां व्यथां तदीयामालोक्य वटपत्रशायिसन्निधिमुपेत्य नम[2] स्यान्तिमनमस्करानन्तरं आत्मीयां मनोवेदनां तस्मै देवादिदेवाय निवेदनाय कृत्वा मुहुर्मुहुः प्रणामान् जगादैवम्–

देव ! देवसेविका कदीयपुत्री किमर्थं वा विचित्रव्रतचर्यामालम्ब्य आतनुते गात्रशोषणम्, न विरमति वारितापि । अपुत्रस्य मे सैव पुत्रोऽपि पुत्रिका वापि । किमहं करवाणि ?

1. पुत्रवान् 2 पूजा

तत्तपश्चर्या नास्मदीय तपश्चर्योपमा । न जानीमो वयं भवद्वासरे भवज्जन्मवासरे वा जागरं विना गणरात्रवासरेषु, विना बिसबीजाक्षवलयान्, विसवलयान्न जानीमः । प्रसाद कुसुमानां कर्णे निधानमन्तरा तदाच्छादनम्, तस्मिन् शयनं वा न विद्मः । पिबामो वयं [1]कंसैर्भवत्तीर्थम् । सा तु तेन स्वाङ्गानि सिञ्चति । चान्द्रायणेषु चन्द्रकलावृद्धि-मनुसृत्य अस्मासु कबलवृद्धिमाचरत्सु सा तनूकरोति । कुर्वत्स्व-स्मासु निदिध्यासन निःश्वास निरोधं सा तद्ध्यानदशायां निःश्वसति दीर्घम् । चिन्मुद्रायै अस्मासु हृदयतलन्यस्तकरतलेषु सा किसलयानुत्तरीयति ।

सितपक्ष बालेन्दु प्रशंसा परे ष्वस्मासु निन्दति सा पूर्ण-चन्द्रम् । एतादृशं तत्तपोविधानम् । किमिदं तपः उताहो उन्मादः ? कियद्भवदीय भक्तिभरितानामपि नास्मान्विमुञ्चति प्रकृतिव्यामोह. । न किञ्चिदविदितं सर्वान्तरात्मनः तव । वेदय किमतदिति ॥

168. अभ्यर्थ्यमानस्स रमाधिनाथः दयारसक्लिन्नकटाक्षमालः ।
मन्दस्मितालङ्कृतसुन्दरास्यः तं लोकवृत्तेरनभिज्ञमाह ॥

166. विष्णुचित्तीयनामनि
काव्येऽस्मिन् शेषशर्मणा रचिते ।
गोदाचरिताभिख्यः
सर्गोऽयं पञ्चमोऽवसितः ॥

इति श्रीकुण्टिमद्दि श्रीनिवासाचार्यस्य
पण्डितप्रकाण्डस्य पौत्रेण शेषशर्मणा संस्कृतीकृते
आमुक्तमाल्यदापरनामधेयं विष्णुचित्तीयमहाकाव्ये
पञ्चमस्सर्गः

—:o:—

1. पानपात्रम्

— श्री हयग्रीवाय नमः —

# ।। षष्ठस्सर्गः ।।

## ।। सुरियालु चरितम् ।।

1. पुरावसं यत्र तु वामनस्सन्
   त्रियोजनीं दूरङ्वास तस्मात् ।
   कश्चि द्विवाकीर्तिरसौ प्रबुद्धो
   ब्राह्मे मुहूर्ते समुपैति नित्यम् ॥

2. स कैशिकीगीतिभिरेतिभक्त्या
   1 जिगाति मां हीनकुलोद्भवोऽपि ।
   कुलानुरूपां जगृहे च वृत्ति
   मत्प्रीतये कच्चरचेलरत्नम् ॥

3. उष्णीष शिरसा च तैलमलिनं कूर्पासकं वर्ष्मणा
   धृत्वा रीत्यरि शङ्ख कुण्डलयुग श्रोत्रद्वयेनापि सः ।
   दीपस्तम्भकरः करे करशरं भस्त्रीं तथा केतकी
   छत्रं कण्ठतले सुदीर्घतुलसीस्थूलाक्षमालां वहन् ॥

---

1. गाऽस्तुतौ जुहीत्यादि

4. स्वच्छश्वेत मृदूर्ध्व पुण्ड्रनिटलः श्रीचूर्णरेखोज्ज्वलः
शोणत्रस्त विलोचनोऽर्वकच सूतालाबु चाण्डालिकः ।
भिक्षापात्रकयोगशब्दित ललत्तालो निशाचूर्ण यु
क्पट्टिमर्मिकपादुकायुगलसत्पृष्ठः प्लवो वैष्णवः ॥

5. आकल्पेन तथागतस्स सुरियाल्वाख्यः कपोलस्थली
प्रोद्यन्मोद विलोचनास्रुलहरीकः प्रत्यहं गायति ।
गायित्वाथ विमुक्तभारनिचयश्चाण्डालिकां वादय
न्नाप्राह्णं पुलकी क्षुधामगणयंस्तृष्णां नरीनृत्यते ॥

6. इत्थं बहुकालनर्तनानन्तरं साष्टाङ्गं नमस्कृत्य
गर्भमण्टप सम्मार्जनजलं प्रस्थरामत्रमापूर्य
बहिर्निस्सृतं जघन्यजेन दत्तं स्वीकरोति ॥

7. दृष्ट्वाग्रवर्णानपयाति दूरं
द्योतेऽथवा ते सुचिर निरीक्ष्य ।
दत्तं चतुर्थेन तु मत्प्रसादं
प्रसार्य दण्डं परिगृह्य भुङ्क्ते ॥

8. एवमचण्डालशील स्सु रियालु स्स्वकीय चाण्डाल जनिजात परमार्ति नैच्ये सकलजनशोच्य विषये आलय भ्रम[1] समीपस्थितो मामासेव्य कृत्वा बहिरावरण प्रदक्षिणं गच्छति । एवं कालं नयन्नेकदा—

9. स्थूलो[2] तु गाहितालय
कुक्कुटसत बोधितो निशीथे सः ।

1. जल निर्गम 2. बिडाल

समयोऽतीत इति द्रुत
गत्या गानाय [1]यान्क्वचिन्मार्गे ।।

10. आस्कन्द्य भ्रमवल्लीं
मुष्टि ग्राह्यान्धकार तामस्याम् ।
चरित बहु भूमि रुणो
दयकाले शून्यगहन मध्यस्थः ।।

11. द्वारस्योभय पार्श्व योर्गलितयोरुद्यन्महाकासम
र्दा पामार्ग जतूक खर्व बदरी कुञ्जा स्समालोकयत् ।
आखून् भ्रष्ट कुसूल पार्श्व सुषिरस्थान् क्षुधया जीर्णितान्
धूलीपूर्ण पुराणघास पिहितास्यान् पात्र वापि चयान् ।।

12. गृहीत धान्यास्य पिपीलिकाली
गतागतै र्जीर्ण वृतिस्थ काण्डान् ।
वन्यान्परीपाक न तांश्च शुष्का
न्नीवारघासान् खिल[2]भूमि खण्डान् ।।

13 स्थूणैक शेषाणि च कूपतीरे
षूद्घाटना न्यूर्जित सङ्करे षु ।
निर्ग्रास कुक्षींश्च जरद्बिडालान्
शक्तान्नवाश्मश्रुविचाल नेपि ।।

14. गच्छन् स सुरियालुः

15. ईक्षामास तदार्द्ध योजन जटा घाटोत्थ शाखोपशा
खाञ्चज्झाट चरन्मरुल्लहरिका सम्प्रेषितो ह्यच्छदम् ।

1. गच्छन्  2. अकृष्टम्

कीटोत्कीर्णदल व्रणच्छलनलिप्या पा दिता ध्वन्य नि
स्सञ्चाराप्त महाफलोपम फल स्फायद्वट वैष्णवः ॥

16. दृष्ट्वा ततश्च तस्मि
न्नेकपदीमपि विलोक्य गहनेऽस्मिन् ।
मार्गालोकन मे त
द्भाग्यं महदिति वट [1]जगामारम् ॥

17. पीताम्बुलाङ्गली गोलैस्समं लुठ
न्त्या जग्ध गोर्द करोटयश्च
नखकृष्ट पलल रेखाङ्कितान्यालीढ
मांसक प्रत्यग्र कीक सानि
निस्स्वनत्तुमुल माक्षिक निवहानिरू
प्याणि कण्टकविलोलामिषाणि
पांसुधूसर मुण्डयवकरा[2] श्वोत्थित
वातचालित केश सञ्चयाश्च
खण्डितानि सजग्ध्यां नराङ्गकानि
भक्षयित्वापि गच्छन्ति नैव किञ्च
श्वापदा मिथो विवदन्ति तत्पदहृति
चूर्णितोत्तप्तमांसानि यत्र सन्ति ॥

18. जङ्घे प्रसार्य मोषकदृष्टिभिश्चात्त
कीकसैर्धावच्छ्नीभिरपि च

1. क्षिप्रम्  2. नापितः

सहमांसतोरणैरुड्डीय शाखिका
धूति सम्भ्रान्तकङ्कारवैश्च
साचिगत्वा हृतैर्मध्यनिहितकरैः
परिदेव मानैः प्लवङ्गमैश्च
क्षणमत्र चान्यत्र च क्षणं दृष्टिगो
चर बहुल क्रिया वर्तनैश्च
यश्च कश्चिदिहास्ति नरस्स नेति
नायमिन्धना हरणस्य काल इति च
पूतिगन्धस्समेति, दूरेऽयनञ्च,
किन्नु कर्तव्यमित्यसौ विव्यथे च ॥

10. कौपीनिते परा[1] सा व पर्याप्ते च
रक्ताक्ष मौजीपृथूदरञ्च
शोणपिपीलिक भल्लात वदरुण
द्विपटीक मेचक विग्रहञ्च
व्यत्यस्त हस्ति मस्तक सम प्रविभक्त
चुबुकदंष्ट्राशोभिताननञ्च
व्यादीर्घगण्डोलिपालीव गर्तस्थ
माञ्जिष्ठरागयुक्श्मश्रुकञ्च
शश्वदाकृष्ट्य सम्पतदान्त्रयज्ञ
सूत्रमंसे निवेशयन्त च कमपि
ग्रासमध्वन्य मीक्षितु समधिरूढ
विटपिनं ब्रह्मराक्षस स तु ददर्श ॥

1· रावे

20· मांसलित नेत्र गोल मनक्षराणि
भूतबेतालिकादि निन्दा पराणि ।
प्रोच्चरन्तं नगोन्नतं कुम्भजानु
सार्थनामक विप्रासुरं ददर्श ॥

21. रे दृष्टोऽसि मया, क्व यासि, चल मे, त्युच्चैर्वदन्भग्नभू
रुट्छाखं न्यपतत् क्षितौ स दनुजो; दोषा दिवाचक्षमः ।
एषोऽपि प्रथने कृतश्रमतया किञ्चिदृढ ङ्ग त्वतः
तिष्ठान् हस्तशरेण दैत्यमवधीत्, रोपं बभञ्जासुरः ॥

22· आकृष्टो न चलन् प्लवस्तु दनुजं वक्षेवधीत्पाणिना,
तस्माद्दूरमलङ्घता सुरहत, स्तं वञ्चयित्व गतः ।
पश्चात्तस्य कृतिं निरीक्ष्य स पतत्तं मुष्टि भि स्ताडय
न्नुद्युक्तं ग्रहणाय तं परिहरं स्तस्यानुसारं भ्रमन् ॥

23. अन्वेषयन्तं वधसाधनं तं
मुष्टि प्रहारै र्दनुजं प्रहृत्य ।
मत्पादपद्मे मनसा स्मरन् स
तं वञ्चयित्व गमनाय येते ॥

24· हण्डे हले गच्छति दुर्विदग्ध
इत्याह्वयं स्तत्कुल कामिनी स्सः ।
धावंश्च ताभिस्सह तं निषादं
जग्राह गत्वा कति चित्पदा नि ॥

25. तदापि तं पाणितलैः कपोणि
घातैर्दृढं षण्डसमो जघान ।

दैत्यं प्लव, स्तं च बलाग्दृहीत्वा
नीत्वा वटं प्राह स कुम्भजानुः ॥

26. छित्वा तावक मस्तकं छुरिकया रक्तं निपीयोच्चल
द्वारोष्णं च भवद्रु टित्रपल्लं[1] जग्ध्वा पिशाच्याहृतम् ।
एतत्तालवनान्तर प्रविलु ठन्मानुष्य शीर्षास्थि कु
ण्डान्त स्सम्भृत वारुणी रसमहं पास्यामि तोष्क्यामि च ॥

27. इयदायास कृतं त्वां
ऋजु विधया मारया मि नैवाहम् ।
इति निःश्वसं स्वदारान्
आनयनायासि पात्रयो रदिशत् ॥

28. आदिश्य चान्त्रवल्ली
बद्धं तं निर्दये निरासाधः ।
वटमूलपातितोऽपि स
धर्म्यं वाक्यं जगाद निष्कृपणम् ॥

२९. हे रात्रिञ्चर ! मामकं शृणु वचश्चैकं, कुतस्ते त्वरा
जेतुं त्वाममरोऽपि नाल, मयि भोः क्वाहं तु पात्रौदनम् ?
गच्छेयं क्व ? न साम्प्रतं विमुखता प्राणावनेऽतोयते,
मा कुप्ये, स्स्पृहयामि नैव तनवे, ऽन्तो नूनमस्या वरम् ॥

30. समाप्तिरेतज्जनुषोऽपरस्य
सौहि[2]त्यमेकस्य च मुक्तिलाभः ।
वरं न कि देहपपेन मुक्ति
रूय? शिशबिर्नः किल मार्गदर्शी ॥

1. शूल्यम  2. तृप्तिः

## (अत्रानेन भाव्यम)

81. अलिनावा भुजगेनवा हुतभुजा तोयेनवाव्याधिना
किमु चोरै रथवा मृगै र्मनसिजै रोगै र्ग्रहैर्वाच्रुषा[2]
कुलिशे नोत विनङक्ष्यतिध्रुव मयंकायः, स नश्चन्वृथा
क्षुधितं कञ्चन तोषये द्यदि, ततश्श्लाघ्यकिमन्यद्भवत् ।।

तदस्तु । वदामि तवैकं हितम् । तदपि प्राणभयेनोक्तं स्वार्थ लाभायेति मा मस्थाः । अवधेहि तटस्थोक्तमिव हितम् । यदि न श्रृणोषि, मा श्रृणु । भूतहितायोक्तं अनुमनुते ईश्वरो ऽपि वा ।

न तावत्त्व व्याघ्रसिंह वराहवृक जम्बुका दि शरारूणा मेकस्तिर्यकू । देवयोनिरसि । सन्त्यस्माकमिव तवापि कर चरण मुखा न्यापधनानि । भाषण मप्यस्माकमिव । कर्तव्याकर्तव्य विचारोऽपि समान एव ।

हा अवादिषमनालोच्य, स्थावरेभ्य. कीटादीना तेभ्यो मृगादीनां, तेभ्यश्च पशु पतङ्ग । दीना, अस्माकं तु जन्तुभ्यो ऽपि, अस्मद्भ्योऽपि युष्माकं करचरण कलेबरादीना पाटवमति शयितम्, विज्ञानमपि घनम् ।

एतादृशस्य तव एकान्त कुत्सावहा इय भक्ष्याभक्ष्य पेयापेय विवेक विहीनता किमुचिता ?

अयमाहारो न शुचिर्नवा स्वादुः । अयमपि सकलदुरित मूर्धन्यया हिसयेव लभ्यते ।

"अस्तु नाम हिसा । सा परलोक बाधाकारी । परलोकः प्राणान्ते खलु । चिरस्थिर प्राणानामस्माकं कुतो वा हिसा भयं" इति मा वादीः ।

प्राणापगमो मनुष्याणा मस्माकमद्य चेतू युष्माकं श्वः परश्वो वा, न चेद्युगान्ते वा अवश्यं भवत्येव । विनाशित्वे समे,

1. वृश्चिकेन  2. व्रणेन

समीपे दूरे इति को भेदः ? समाने सागरनिमज्जने पर्वत परमाण्वोः किमन्तरम् ? भविष्यद्विचारः किमुपेक्ष्यः ?

तपोलब्धवरबलेन गीर्वाणानां गर्वस्योन्मूलने पेशला अपि हिरण्यकशिपु दशानन प्रमुखाः शतसहस्र संख्याक वर्षजीविनोऽपि अन्ततः पञ्चताङ्गतास्स्वै जितस्यैव यमस्य अधीना अभवन्

इह युष्मासु प्रबलेषु अमुल स प्रबलः, सकलभूत तारतम्यं स्वस्वथान विशेषेण सम्भवति । तच्चण्डांशु तनय पुरी परिधि प्रविष्टानामस्मा कमिव भवतामप्यनप हार्यैव बाधा ।

यूयं तत्सौरि मुख बर्हिर्मुखा जात्या भ्रातर एव । तथापि परस्मिन् लोके यूयं च ते च बाध्यबाधकतां लभध्वे ।

तैजस्यास्य तारतम्यस्य तमस्सत्त्वं च हेतू । तमस्सत्त्वयो राहूतयः कारणानि, व्याहृतिभिः ऋतुषु चरु पुरोडाशाहुति भुक्तिभिः पवित्रा अमर्त्या युष्मद्भ्योऽपि दीर्घकालं ते जीवन्ति ।

तदीयपावनत्वं विलोक्यैव हि चतुर्मुखांशजः सुधांशुः विलीनस्सकलरससीमां सुधां तेभ्यो दत्वा तानानन्दयति । इदमर्थकस्य वेदवचनस्य प्रवचनाय न वयमर्हाः । परन्तु वेदः "प्रथमां कलामनलः पिबतीति वक्ति । कि चान्याः कला' क्रमेण अन्ये देवता इति च ।

32\. एतत्सर्व विचार्य यत्ते रोचते तत्कुरु । इत्युक्तवति तस्मिन् चण्डाले कह कह विहस्य स ब्रह्मरक्षा एवमाह–

33\. मा हिंसीर्वेदैर्वा शास्त्रै र्नाध्यैम कि तानि ?
प्रथमां पिबते वह्निरितीर्त इदं नैव रोचते मह्यम् ॥

34\. मा वादी, रमरांश्च नश्च सहजान् पीयूषपूतांश्च ता
नाख्यः, चाद्य कलां विधोर्ग्रसति सोऽग्निश्चेत्यवादी, रहम् ।

त्वां पृच्छामि "स सर्वभुग्भवति वा नो वा ? प्रमाणं स न
स्तेनैवाल, मघाय किं प्रवयसो चर्यानुचारो भवेत् ?"

35. सखा च विष्णोर्डयनं गरुत्मान्
कृच्छ्रेण लब्धां च सुधां सुरेभ्यः।
दत्वा, भुजङ्गाशनतां ययाचे,
सुधापि जात्यन्नसमा किमु स्यात् ?"

36. किं लब्धं शयनं विना निघसनं, विद्याः पठित्वा मया
विश्वस्यादमुमर्थवादमनृतं को वा प्रतार्येत वा ?
विद्या वाग्भि रवाप्नुया न हि मनाक्शंसा, "वेना स्वाद्विदं,
विद्यागन्धिलशाक एष, नितरामानीयतां चेत्यमुम्" ।।

37. इति गीष्पति वचन मवलम्ब्य निजालापहेलनापरस्य तस्य राक्षसस्य कुतर्कोक्तीनां श्रवणेन जनितस्याघस्य निष्कृतये कृष्णस्मरणं विधाय, प्रतिवचनैर्विप्रकृत. कान्यप्यवाच्यानि वदेदयमिति, कार्यार्थिनो मम तद्वचननिराकरणेन किम् ? इति तच्छन्दोनुवर्तन परः जुगुप्सितनीच स्मरणोऽपि तन्मुखोल्लासाय शब्दच्छलेन मनसि सुगतं विधाय;

त्वमसि सर्वज्ञः। अहं तु नरः हीनकुलोत्पन्नश्च। अनभ्यस्तशास्त्रः किमीशे तव प्रतिवचनदानाय ? क्षमस्व मद्वचन स्खालित्यानि। कृपया मां विश्वस्य मदीयप्रार्थनामनुमन्यस्व।

38. प्रख्यातस्स्वयमेव दानवकुले त्वं तत्तादृशस्याहम
प्येकां कीर्तिमुपाहरामि न निराकुर्वे तनोरर्पणम्।
नित्यं नन्वहमाचरामि नियमं, निर्वर्तयेस्तद्भूतं
सख्यं साप्तपदीनमित्ययि मिथस्साङ्गत्यमालोच्य नः ।।

39. किं तद्व्रतमिति चेदुच्यते शृणु–

40. निकटकुरुङ्गुडिलक्ष्मीनाथं गीतिभिरहं समाराध्य ।
आयाम्यनुदिनमेतद्व्रतं मया कारयाद्यापि ॥

41. अनुमत्या ते गत्वा नियममनुष्ठाय पूर्ववत्, पश्चात् ।
अशनी भवाम्यवश्यं मामनुगृह्णीष्व दैत्यकुलमौले ॥

42. इति वदति निषादे तस्य चामृश्य गण्डं,
स्मितलसितमुखस्सन्नासुरः पान्थ ? मोषात् ।
पुषितपलल ! का ते निस्स्पृहा ! ह्योनुजाता ?
किमु जिगमिषसि त्वं मां प्रतार्यासि दक्षः ॥

43. को वा न्वत्र तवेदृशं वचनमाकर्ण्यास्य वश्यं वृथा
ग्रासं मुञ्चति ? को नु वेति च तनुं त्यक्तुं वचो दोष तः ?
नो मुञ्चेय महं तु, न त्वमपि चोपेया; इदं निश्चितं,
किं वाग्भिर्बहुभिश्च; हेऽन्त्यकुल किं वा चिन्तया वा शुचा !

44. आसुरवचनं श्रुत्वा पिधाय कर्णे वदन् हरेर्नाम ।
विश्वस्या यदि शपथं करोमि दनुजेति तस्य सम्मत्या ॥

45. कृत्वा बहूनि शपथानि तस्मिन्न विश्वसति–

46. यस्मादुदेति च जगत्परिपाल्यते च
येनैव यस्य जठरे लयमेति विष्णोः ।
तस्यापरोऽस्ति सम इत्यभिधायिनस्स्याम्
पापस्य भाजनमहं तु न यद्युपेयाम् ॥

47. इत्येतेन विमुक्तबन्धनिचयस्सञ्जातकर्मक्षयो
मानाथं प्रणिपत्य गीतिनिचयैस्स्तुत्वा ततं वादयन् ।

एत्यासत्यभिया द्रुतं व्रतससाप्त्या निर्वृतस्सोऽन्त्यजो
व्याजह्रे द्विजयामिनीचर वरं कार्तज्ञभा रानतः ॥

48. मुक्तं तावकबन्धनाद्गतमितस्संसेवनाच्छ्रीपतेः
मुक्ति र्मा त्वरयन्त्यमूनि भवता संप्रेषणे पश्यतात् ।
यौ पादौ च करौ च यौ यदुदरं यत्कञ्च यच्चाप्युर
स्तौ पादौ च करौ च तौ तदुदरं तत्कञ्च तच्चाप्युरः ॥

49. दृष्ट्वा तं समुपागतं वचनमप्याकर्ण्य तस्यार्जवो
पेतं कण्टकिताङ्गकःप्रमदबाष्पापूर्णनेत्रद्वयः ।
मध्याह्नातपतप्यमान विकच प्रस्निग्ध मुण्डस्थलो
दोषाटप्रवरो जन¹ङ्गमवरस्योपान्त भूमिं गतः ॥

50. प्रदक्षिणीकृत्य धराधरो पमः
कुजं यथा पाकलमत्तकुञ्जरः ।
पपात तत्पादयुगे स्तुवन् च तौ
दधौ स एकैकश एव मस्तके ॥

51. एतद्भूमितले सुरासुरमहीभृन्मौनिवाचातपः
श्रीरस्मात्परतो विभाति नितरामस्मिन् महादुष्करे ।
प्राणत्याग फले तु सत्यवचने नो विद्यते, वत्सरा
न्नाना प्राणिमि, सत्यसङ्गरविधौ त्वं त्वादृशोऽहं शपे ॥

52. को वान्यस्सदृशस्तवास्ति विपुले विश्वम्भरामण्डले
सत्येऽस्मिश्च धृतौ स्मृतौ च मुरभित्पादाब्जसंसेवने ।
रागालापसुधासमुद्रलहरीपोतद्विपञ्चीमहा
तुम्बीकस्य कुरुङ्गुडीशसदयापाङ्गैकपात्रस्य च ॥

1. चण्डालवरः

53. इति स्तुवन्तमालिङ्गय राक्षसं स जनङ्गमः ।
कृपया ते निशाटेन्द्र निर्वृत्तनियमोऽभवम् ॥

54. नूनं करोतु शपथानि शतानि लक्षं
प्राणव्यपायजनितेन भयेन कश्चित् ।
को वा जहाति कबलं बहुलश्रमेण
लब्धं निशाचर ! परो भवदन्तरेण ॥

55. हे विप्र पुण्यजन ! पुण्यजनाभिधानं
युक्तं तवैव सुकृतस्य फलेन नूनम् ।
त्वद्वंशसञ्जनित सर्व निशाचराणां
सामान्यतोऽजनि किलाङ्ग तवानुषङ्गात् ॥

56. क्षुद्दावानलहेतिभिस्तु जठरे दन्दह्यमामेंऽपि मां
कर्तुं नित्यमुकुन्दपादकमलद्वन्द्वार्चनामत्यजः ।
धात्रान्नं विहितं वयं हि भवतां मद्भक्षणे नास्त्यघं
मा किञ्चिद्वद; ते शपे; कुरु तनूमेतामरं पारणाम् ॥

57. हार्दं वाक्यमिदं वदामि, न पुनर्वाङ्मात्रत, स्सर्वभू
तान्तर्वर्तिपरात्परस्य भगवान्साक्षी, निशाटेश्वर ।
मैत्री चेन्मयि, मत्तमामकतनोरन्तस्थमेदश्च हृत्
भुङ्क्ष्वेदं पललं कवोष्णरुधिरं चापीय तृप्तो भव ॥

58. तस्येदं वचनं निशम्य, स जगादैवं; महात्मन्निदं
किं वोक्तं, ननु निर्दयं; ग्रसितमेवैतन्मया जेमनम् ।

एतावन्ति दिनानि, दुष्कृतचयैस्साकं, च पुष्टा तनूः;
गागच्छेत्किमु कोऽपि तापसवरोऽकस्माच्च कैश्चिद्दिनैः ॥

59. नो पश्येत्करुणातरङ्गितदृशा किं वा; कुपूयं जनु
श्चेदं किन्नु न तारयेदिति महाकालं पुनर्नेष्यतः ।
दृष्टेर्मे पदवीमुपेत्य च भवान्मद्दैत्यतामोचनं
त्यक्त्वा "भक्षय मांस" मित्यकथय, तस्याने किमेतत्तव ॥

60. त्वादृशभागवता यदि न पावयेयुः किमस्ति गतिरन्या ।
मत्सदृशानां; पूर्वं नैच्यमनालोच्य पश्य कृपया माम् ॥

61. स्वर्णयति स्वधिति वा ब्रह्मघ्नं वापि शस्त्रमितरद्यः ।
तत्स्पर्शवेदिनस्स्यात् न्यायोऽस्मादृशि भवादृशो महतः ॥

62. इति देहग्रहणमनभिलषतस्तव को नु भाव इति ।
पृष्टो जगाद देहार्पणादघोन्मूलनं करुणा ॥

63. घण्टाकर्णकृतादघात्किमधिकं मेऽघं ? मुनीनच्छिनत्
यस्तस्यापि निवार्य दुष्कृतमदात्स्वीयं पदं माधवः ।
नालं किन्नु ततोऽपि दातुमधिकं भक्तस्तदीयो न किं
मह्यं तत्सुकृतस्य दानमुचित ? कि न प्रियं तद्धरेः ?

64. इत्येतानि दनुजस्य वचनानि श्रुत्वा कथमेतत् संभवेदिति पप्रच्छ तं सुरियालुः । स एवमुवाच—

अहमेको ब्रह्मराक्षसः नाम्ना कम्भजानुरस्मि । उग्रकर्मा न्यग्रोधमेनमाश्रित्य वञ्चयित्वा पथिक पञ्चजनान् भनज्मि

तत्पललम् । पूर्वस्मिन् जनुषि सोमशर्मनामाहं भूमिसुरः । अत एव दयनीयः । केनचिद्दूष्कृतेन ब्रह्मराक्षसोऽभूवम् । यदि त्वं दयया अद्य गीतस्य कैटभारातिगानस्य फलं सजलं मह्यं दद्याः बीभत्सकुत्स्यार्हस्य जनुषोऽस्य अन्तो भवेत् । सिद्धयेच्च तवार्तरक्षण सुकृतम् । अत्यन्तधर्मसाधन मेतच्च शरीरं तव अक्षतं गृहमेष्यतीति ।

तच्छ्रुत्वा सकलकलं विहस्य स विष्णुदास एवमवादीत्–

65. ईदृक्षाण्यधिकानि च नीचानीतोऽपि कति शरीराणि ।
नाभूवन् ? नैकाह्नः क्षणगीतफलं न चास्य दित्सामि ॥

66. अवनीपततनुमनुद्राग्वनीपततनुश्च
वारेषु कतिषु तेऽभूच्च मे च
वारणतनुमनु द्राङ्मशकतनुश्च
वारेषु कतिषु तेऽभूच्च मे च
केसरितनुमनु द्राक्कीटकतनुश्च
वारेषु कतिषु तेऽभूच्च मे च ।
दिगधीशतनुमनु द्राक्सेवक तनुश्च
वारेषु कतिषु तेऽभूच्च मे च
सोमयाजिकतनवो निषादविहग
तनुधरा नाभवाम वारेषु कतिषु
प्रेतभूताश्च नाभवा च रमाधि
नाथसेवका नाभवाम तु कदापि ॥

67. द्योत निशा च कुवेणी जल मद्वि[1]जवाक्य तनुरियं कि वा ।
पुण्यपणेन क्रय्या स्यात्सामुद्रमिव चन्द्रसंज्ञेन ।।

68. इति वदन्तं तमाह कुम्भजानुः –

69. एतद्दिनगानफलस्यार्धं वा देहि कि तवोनं स्यात् ।
उदधेः कि स्याल्लोपः सलिलकणेनाण्डजेन गिलितेन ।।

70. इत्युक्तं दनुजं जगाद ननु निर्बध्नास्यदेयं सुर
द्वेषिन् याचसि, कि मया वितरितु तेऽङ्गीकृत भौतिकः ।
देहो वा ? किमु गीतगानजफलं वा ? व्यर्थवादे. फलं
किं स्यात् ? त्वत्कविलम्बने तनुमिमां विघ्ना हरेयुर्ध्रुवम् ।।

71. इति । तदाकर्ण्य स सालक टङ्कटेयः व्यथाभरभुग्न. प्रसह्य निगृह्य निरर्गलस्रवदश्रुरेवमवादीत् ।

हन्त कैट भारातिप्रियदासैर्दयालुभिर्भाव्यम्, आसंश्च तथैव पूर्वे । तत्सर्व तव विदितचरमेव । भविष्यच्च भागवत-चरितं वदामि श्रुणु ।

विशिष्टाद्वैत प्रतिष्ठापकः वैयासिकसूत्राणां रचयिता भाष्यस्य विष्टरश्रवसो विशिष्टाद्वैतप्रतिष्ठापकः लक्ष्मणयोगीन्द्रः चिरकालसेवासन्तुष्टेन निजदेशिकेन गोष्ठीपूर्णेन अनुज्ञापितः "अयोग्येभ्यो नोपदिश" इति । तेन यथावदुपदिष्टं सार्थक मूलमन्त्रं संसारदावानलदह्यमान मानव जनार्तिनिर्वापकं

1. अदन्तस्य

दयातरङ्गितान्तरङ्गस्सन् अधिरुह्य रङ्गेशधाम दामोदरनाम चामीकरगोपुर मुच्चै स्स्वरेण उद्घोषयिष्यति । तेन आज्ञाभङ्ग विप्रकृतं गुरुतल्लजं स शिष्यप्रकाण्डः "देव ! भवदाज्ञापरिपालने दासस्यैकस्यनरौरवादि नरक दुर्गति स्स्यात् । अतिक्रमे तु सकलभागवत परिषदः परमपदप्राप्तिः । तयोः कतरच्छ्रेयस्करम् इति विचार्य भवदुपदिष्ट मिवैव विश्राणित इति सान्त्वयिष्यति ।

स एव लक्ष्मणमुनिः निजच्छात्र सत्रस्य प्रत्यहं विना मूल्य गव्यमर्प य तो वंल्लवीवल्लवयोः प्रादात् परमं पदम् ।

स एव बन्धमुक्तोऽपि कालान्तरे अवतारान्तरे सङ्कुचित- ज्ञानानां विषयैकपराणा नराणा परमे स्पृहां जनयितु सुन्दरजामातृ- नाम्ना अर्चिरादिगति विशदीकरिष्यति ।

स लक्ष्मणमुनिरेव यादगिरि प्रान्तेषु पाषण्ड प्रचुरेषु शठकोप समाख्यया अवतीर्णः नीरन्ध्रशास्त्रवादै. आन्ध्रादि विषय विद्वज्जनान् वादसङ्गरं याचित्वा बिजेष्यति । गरुडकुध्र गुहा कण्ठनृकण्ठीरवेण कुहनात्रिदण्डिना प्रसारितत्रुसी कुसुम्बा- म्बराम्भः कमण्डलु. अङ्गीकृत तुरीयाश्रमः फणिप कण भुगक्षपाद बादरायण कपिल जैमिनि शास्त्राणि मठमहा नस मही सुर प्रभृतीन् अन्तेवासिनो बोधयिष्यति ।

अन्यश्च महामनीषी निस्समप्रतिभाविलासः हयवदन सदाराधकः वेङ्कटेश इति । वेंङ्कटेश्वर घण्टावतारक मधुमथन प्रतिपादक प्रबन्ध शतस्य कर्ता शिलोञ्छवर्तन निर्वर्तित जीवयात्रः स्वस्मै जरच्छदन शाकदातेति अगस्त्यवृक्षस्यापि निर्वाणं दास्यति । एतादृग्येष्याण्यपि मदीयदिव्यबोधेन विज्ञातु योग्यं त्रैकालिकज्ञानयुक्त इदं जन्म अभिलषणीय मिति मा मंस्थाः ।

तज्जात्यमेव न तु तपस्सत्यशमलब्धम् । निषादी भविष्य-दर्थान् व्याचष्टे । किमेषा शुचिः ? कौशिकः गौलिः इत्यादि तिर्यञ्चोऽपि भावि सूचयन्ति । किन्ते तपस्विनः ? तथैवास्माकमपि विज्ञानम्, न शुचितापादकम् ।

आचरण प्रचारशून्येन अधीतिबोधमात्रेण नास्तिक्य-प्रायत्वादेतादृशज्ञानेनापि वयं धर्मदूराः न संसारतरणसमर्थाः । अत एतद्विरूपविग्रहं अनुग्रहेण अपनुद्य कृतार्थं करोतु भवान् ।

इति पादपतितः अद्यतन गाने पादांशोवा दीयतामिति प्रार्थयामास । स तु नाङ्गीचकार । अन्ततः चरमगीतफलं वा अनुगृहाणेति विज्ञाप्य दृढगृहीत पादद्वये तस्मिन्ननुतिष्ठति–, तं तथैवास्तु, उत्तिष्ठेति उत्थाप्य एतद्ब्रह्मरक्षस्त्वप्राप्तिं सविस्तरं ब्रूहि इति पप्रच्छ । दुःखार्तस्स एवं वक्तुमुपचक्रमे ।

72. कुण्टिमद्दि श्रीनिवासाचार्यपौत्रेण संस्कृते
अनूदिते शेषशर्मणास्मिन्काव्ये रसोज्जले ।
आमुक्तमाल्यदाभिख्ये सर्गष्षष्ठस्सितोऽभवत्
राक्षसाब्देऽश्विने शुक्लसप्तम्यां मन्दवासरे ॥



श्री

।। श्री विष्णुचित्तीय महाकाव्यम् ।।

# सप्तमस्सर्गः

आमुक्तामाल्यदाभिधानम्

(1, 2, 3, 4)

प्रथम, द्वितीय, तृतीय, तुरीयसर्गाः



# विज्ञापना

नन्नयति क्कनादय' क विप्राग्रसराः भारतादि पुराणानु-वादेन, श्रीनाथादयः नैषधारिका व्यातुवादेन अल्लसानि पेद्दनादयः स्वतत्रांध्र काव्यनिर्माणेनच । अन्ये कवि पंडितोः लक्षण ग्रंथानुवादे नापि, आध्रीं चतुरस शोभिनीं सर्वांगीण-रमणीयां च अकार्षुः ।

स्वतंत्रकाव्येषु विष्णुचित्तीयं आमुक्तमाल्याभिदानार ऊहापोह वर्णना वैदग्ध्येन अचुबितार्थ संपत्याच ब्रह्मसुत्तार्थ प्रतिपादनेनापि काव्यशास्त्रपदव्या परांकोटि माटीकते ।

मनुसंभवन्नेदं ललितं धारा सौभाग्य समुपेनं, तथापि संस्कृत काव्येषु आंध्रप्रबंधेषुवा अदृष्टपूर्वैः भावैः तद्वाचक परैश्च नितरां देदीष्पते

इतः पूर्व सुमतिशतकं मनुसंभवंच संस्कृते अनुध आंध्र-कविता प्राग लभ्यदेशांतर पंडितहृदया ह्लादाय गैर्वाणीवाण्या स्समार्जितमांध्रा भाषाधमर्ण्य मनागपोहितु च प्राचीकटं । उभयभाषा कोविदाः अभिननंदुश्च ।

तेनैवमार्गेण विष्णुचित्तीयमपि आंध्रकबि प्रतिभां विषयांतरे प्रख्यानुं अनुदितं । अत्रमुलकर्तुः वंशा दिवर्णं नम प्रस्तुतमिति परित्यक्तं । यद्यत्रगुणाः नै मुल कर्नुरेव, चेद्दोषाः अनुवक्तुर्ममेति गुणपक्षपातिनः सहृदयाः, निन्दितुं नंहितु वा आकलयंत्विति सप्रश्रय मभ्यर्थये इति ।

**कुंटिमद्दि शेषशर्मा**

ग्रन्थममुं मुद्रणानुगुणम् नागर लिप्यांलिखितवते, बी. विश्वेश्वर शास्त्रिणे, मुद्रणाय अत्यन्त यत्नकृते, क. राघ गोदावल्लयभः रामस्त सन्मङ्ग ळानि (कृष्णा महादयायच) ददातु ।

# श्रीगोदायै नमः

1. श्रीकान्ता कमनीय हार तरले श्री वेङ्कटेशस्स्वयं,
कण्ठालम्बित कौस्तुभे तु कमलाकान्तामणिर्बिम्बितौ ।
कायस्वच्छतया, तदन्तरगतौ विद्योतमानौ बहिः
दृश्येते इव रत्नयोः, वितनुतां भद्रं च निःश्रेयसम् ॥

2. यद्विस्तारफणाततिर्मणिमयी विश्वम्भरायोषितः
क्षीराम्बोधिसुतां प्रतार्य हरिणा स्वैरं रिरंस्वाः क्वचित ।
भास्वद्रत्न समुच्चयैर्विरचिताऽऽसीच्चन्द्र शालावलिः,
वन्दे तं समतीत नैकविधि कल्पान्तं त्वनन्तं मुहुः ॥

3. खनटत्पयोब्धिवीक्ष्यरसातलान्योन्य-
पिण्डीकृताङ्ग भीताण्डजानि
धृतकुलायार्थं खण्डितसमिल्लवरूप-
चरणान्तिक भ्रमत्तरुवराणि
घनगुहाघटितझाङ्करणलोकैक द्वि-
दुन्दुभीकृतमेरु मन्दराणि
चटुलझम्पातरस्स्वनगरी विपरीत-
पातिताशाकोण परिवृढानि
प्रबलतरबाडबीकृतेरम्मदानि
भास्वरेरम्मदीकृतबाडबानि
कलुषतूलावली निरस्यन्तु पतग-
राजपक्षवातू लविजृम्भणानि ॥

4. लब्ध्वा हरेर्नयन चालन संज्ञयाज्ञा
ब्रह्माण्ड भाण्डचयसृष्टि विनाशनानि ।
चर्कर्ति हन्त चलनाचलनैर्यदीयैः
सेनापतेश्शरणमेमि हिरण्यदण्डम् ॥

5. ग्रीवानिस्सृतशोणितानि हुतभुग्ज्वालायितान्याननादुद्गीर्णामृतमुद्गतीकृत, मथ.स्थालीकृतं राहु[1]कम् ।
कोपेनापरदानवान्नपचनायेवाच्छिनद्यद्द्रुतं,
चक्रं नौमि सुदर्शनं प्रसृमरज्वालावली भास्वरम् ॥

6. मधुवैर्यापूर्यमाणो वदनपरिमलाकृष्टनाभीसरोज-
स्थितमत्तेन्दिन्दिरालीनिचय वलयितः पूर्णशीताशुगौरः ।
कलुषाक्रान्तासुरासुप्रकरमिव पिबन् पाञ्चजन्यो मदीय
दुरितध्वान्तं निरस्यन्, जनयतु नितरां मङ्गलानां समृद्धिम् ॥

7. यादवसार्वभौम भयदायतबाहुनियोगयोगतो
दानवराजसाल्वपुरहेममणीवरणस्सुसङ्गतः ।
कश्चिदभूद्यदीयवलयेषु, नमामि हरेर्गदां मुदा
कीलितकल्पकोज्ज्वलसुगन्धिल कौसुममाल भारिणीम् ॥

8. "मुष्टिग्राह्यसुमध्यमायतशिखां प्रेम्णा त्रिवक्रां हरेऽ
कार्षीस्त्वं प्रगु[2]णां, कुरुष्व सगुणां तादृग्गुणोद्भासिनीम् ।
तद्वन्मा"मिति, शात्रवेषु शरसन्धानस्य दम्भान्नता
शार्ङ्गाख्या सततं धनूरवतु मां तापत्रयध्वंसिनी ॥

1. शिरः 2. ऋजुम्

9. प्रततोर्ध्वाधरभागपीठयुगली भास्वत्त्सरुस्तम्भ सं-
स्थितिदीव्यत्तपनीयनक्रवदनज्वाला लसन्नन्दकः ।
असिना चापि विनीलधूमलतिकारूपेण विज्ञान दी-
पितरूपः कुरुतान्ममाघलतिका सन्दोह् विच्छेदनम् ।।

10. तापं द्वादशसूर्यमध्यवसतेर्जातं महान्त रसा-
सूर्यावासवशात्तदीयसुमनः कञ्जात जाताद्धरिः ।
दूर न्यस्य मरन्दपूरलहरीवारादनन्तं यया-
वानन्दं समुपास्महे सुकृतिन स्सू[1]रानमून् द्वादश ।।

11. सानुगसायुधकमला
दयितं नत्वाऽथ शेषशर्माऽयम् ।
आमुक्तमाल्यदाख्यं
संस्कृतयति काव्यरत्नमिदम् ।।

12. मनुसम्भववन्नेदं
सुलभं परिवर्तनाय सुखद मपि ।
हयवदन एव कृत्यं
कारयतीदं च तारयति ।।

13. सुगुणा यदि विद्यन्ते मूलकर्तुस्तु ते समे ।
दोषाश्चेदनुवक्तुस्स्युः दोषज्ञाः क्षन्तुमर्हथ ।।

14. फलमायासानुगुणं
नन्वस्ति न वा परामृशन्त्वार्याः ।

1. सूर्यान्, सूरीन्

क्वचिदपि रसिकजनाना-
मास्वाद्य चेन्ममोद्यमस्सफलः ॥

## श्रीविल्लिपुत्तूरु वर्णनम्

15. ललितोद्यानपरम्परा शुकपिकध्वाने प्रतिध्वानिते
वलभी नील हरिन्मणी शुकपिकस्वान भ्रमापादकैः ।
रमणीया नगरी धरणीसीमन्तरत्नायिता
लसदभ्रङ्कषहेमसौधनिचयैः श्रीविल्लिपुत्तूरिति ॥

16. नवमाणिक्यविनिर्मितैस्तु कलशैरम्भोजकोशोपमैः
फलकैस्स्वर्णमयैश्च कुड्यखचितैः श्रीधन्विनव्ये पुरे ।
धृतशीर्षण्य पिनद्ध कण्टकयुता द्यो वैजयन्तं गृहा-
ननुजेतुं कृतनिश्चया अतितमां राजन्ति योधा इव ॥

17. जलधि वासाश्लिष्ट शैवाल दिग्गजभ्रमकारि मरकत नैकपेषु करवर्ज कबलितकरिसिंह मोहकृत्तच्छिलारचित कण्ठीरवेषु राजत्सु तीर्थैश्च नागाभिषिक्त सुवर्ण रसालिखितेन्द्रिरासु इन्दिरापार्श्व चित्रितशङ्ख रथपाद बिम्बवन्मणिबद्धवेदिकासु, रथपाद

द्वारविततिषु मणिबद्धतोरणासु
गृहवरेषु शिरस्थ ललामकेषु
अन्यं गेहेन्दिरा करलिप्सयेव;
बद्ध सूत्रा इवाभान्ति वीथयोऽत्र ॥

18. कुङ्कुमलेपलिप्त पृथुपाण्डयवधूकुच गर्वहारिभि·
लाङ्ग[1]लिन: फलैरपि च वज्रनिबद्धपथ[2]श्चकासति ।
तत्पुरगेहसर्ग परिशिष्ट मणी हरणाधमर्णिताऽ
र्णोनिधि लग्नकीकृत सुपर्व नगामर निम्नगा इव ॥

19. कोरकितनारिकेलै-
र्मणिकुट्टिमबिम्बितैर्विराजन्ते ।
द्वाराण्ययत्नविरचित-
गोमुखवद्रङ्गवल्ल्यलङ्कृतवत् ॥

20. कल्हारह्लदपु[3]ष्करेषु स निशाचर्च वगाह्यङ्गना:
कुम्भीलोल सरोजनालविलसत्पाण्यो, मृदौ मध्यमे ।
पीनोरोजभराक्षमे, कटितटे धृत्वा रटन्नूपुरा:
स्नानाम्बूनि हरेश्चरन्त्युपवने दिव्यप्रबन्धानना: ॥

21. आपूर्णोदक दीर्घिकाजलचरन्मत्स्य ग्रहस्यग्रत-
द्वृक्षावासकटिट्टिभोत्पतनसपातैर्गृहश्रीर्मुदा ।
स्वात्मान विनिगूह्य तत्पुरवधूसाङ्गत्यत: कन्दुकै
खेलन्तीव विभाति पक्षिनिनदै. कोलाहलोल्लासिनी ॥

22 आहारावासदत्त्योर्भवति गुरुतरा का न्विति प्रष्टुकामौ
मन्थानाष्टापदाद्री इव समुपगतावन्नवासादिदानै: ।
दीनत्रातॄन् निशान्तान् हरि जलनिधिजास्यन्दनौ मर्त्ययुग्मै-
रुत्कीर्णौ राजमानौ लसत इव रता सक्त नैलिम्पयुग्मै: ॥

1. नारिकेळा: 2 समास्मन्ते अकारान्त: 3 जलेषु

23. सवलयध्वनि शारिकाचालनक्रिया
यतिचित्तमपि चञ्चलीकरोति
सम्मुखागतयुवालोकनौदाशीन्य-
मसमास्त्रमपि कुविटीकरोति
श्री कार्यंकृद्दर्शनी द्गमति नतिथि (नोद्रति नतिभिश्च)
श्शक्रोऽपि तत्क्रियायै स्पृहयति
हरिगृहशङ्खाय[1] वलितनेत्रान्तोऽपि
यासां प्रजाचित्तमुच्छिनत्ति
शारि निक्षेप शिथिल धम्मिल्लवाम-
कर समी करणो जृम्भितस्तनेन
कञ्चुके तृटयति द्यूतदेवनेषु
युवजनमनांसि बारयोषा हरन्ति ॥

24. ताम्बूलरागापगमाय दन्त
प्रभाप्रसाराय च वारमुख्याः ।
पङ्क्ति रदानां ननु शालिबीजे-
नैकेन वा शोधयितु समर्थाः ॥

25. आलिप्य पी[2]तामपि पेश[3]लास्ताः
[4]पत्रोर्णसंघर्षणतोऽपि तस्मिन् ।
सज्जेद्यथा सा तु न लेशतोऽपि
स्नात सखोष्णे समगन्धितोये ॥

1. शङ्खरवाय 2. हरिद्रा 3. धौतकौशेयम् 4. दक्षाः

26. चेलाञ्चले हस्तविचालनेन
सुगन्धलेपं स्तनयोश्शरीरे ।
विलेपनाय प्रभवन्ति दक्ष
कटाक्षमालाहृतषि द्गचित्ताः ।।

27. माराहवच्छिन्नगुणास्तु मुक्ता
विनूत्नकान्ति जनयन्ति यासाम् ।
पृच्छन्ति गोत्रं विटमप्यधीश
निस्स्वे तु रक्षन्ति च याश्च तस्मिन् ।।

२8. स्फुरद्रसं याः कवने समर्था
वाराङ्गनास्तत्र लसन्ति कामम् ।
बहिस्स्थिता राज्ञ इवावरोधा-
स्सूनास्त्र निस्त्रिंश समानरूपाः ।।

29. हैमान्नैव धरन्ति किट्टकलिता, न्मुक्ताकलापान्विना;
कस्तूरी च विना, बिडालकमदं सस्नेहमित्यङ्गनाः ।
आर्द्राणीति सुमानि चापि, सुरभि धूमं विना कैश्यके;
घर्षन्तीति वरासिकानपि, विना सूक्ष्मान् मनोज्ञांशुकान् ।।

30. कल्पे सौधाग्रभागे स्तनतटनिहितां वेणिमेणीदृशाभिः
मोक्तु शातैस्सुमानां कररुहशिखरैर्नून मुत्सारणेन ।
प्रोद्यल्लोलम्बनादा जटिलचिकुरविश्लेषणं कामुकानां
भ्रान्ति तन्वन्ति गीतो[1]निनदकरशिखाचारुसञ्चालनानाम् ।।

1 विहः

31. अपि धनिभिरकुलयौवन-
रूपैर्घटनाय नाऽऽलिलौभ्योक्ति' ।
श्रुतिमेति यतस्तत्पुर-
वारवधूनां श्रुतीश्रियौ नूनम् ॥

32. रत्नारो[1]हणकामिनीकषितपी[2]तानीरसंसर्गतो
निद्रासक्ततया स्वपक्षविततौ गौरीभवन्त्यां पुरि ।
आरामस्थसरोमरालनिवहा. कुर्वन्त्यतन्तोऽम्बरे
गाङ्गेयच्छदनाकसिन्धुनिवसत्कादम्बमिथ्यामतिम् ॥

33. पक्षत्या स्वशिरो निधाय, निभृत निद्राण[3]माटीकुलं
कुल्यातीरगतं प्रभातसमयस्नात प्रयातद्विजैः ।
न्यस्तं वस्त्रचयं भवेदिति· तदावासं निनीषूत् पुरी-
रक्षान्, डीनखगान्, विलोक्य, कलमा गोप्यो हसन्त्युच्चकैः ॥

34. कलमाः पक्वा विनम्रा विघटितसलिला हल्लकाग्रे चलद्भि-
र्निजसूकै र्भान्ति, पादै रुपरि विरचितैस्तृष्णया दूयमानाः ।
उपकण्ठोद्यानवाताहतिभिरतितमां, तत्र पेपीयमाना-
स्सुमकं[4]सापूर्णपुष्पासवमिव मधुरं शीतलं सौरभाढचम् ॥

35. पक्वा गण्डोपलाभा मधुररस झरी मुद्गिरन्तो विशीर्णा
जम्बालाक्ताश्च भूमीपनसफलचयास्सम्पत च्चञ्चरीकाः ।
द्योतन्ते भिन्नगण्डद्वय तट विसरद्भूरि दानाम्बुशादाऽऽ
लोलायः श्रृङ्खलासङ्गतसुरभि मदोन्मत्तमातङ्गकल्पाः ॥

1. सोपानं 2. हरिद्रा 3. शरारिः (जलपक्षी) 4. पानपात्रं

36. श्यामप्रान्तसुगन्धपाण्डुरफलाली भासुरैर्मेदिनी-
रेणुस्पर्शिभिरायतैश्च विपुलै रम्भागुलुच्छोयैः ।
राजन्ते पृथुचम्पकप्रसवसम्बद्धैश्च माल्यैस्समैः
विष्वङ्मूर्छितमत्तषट्पदयुतै र्मोचावनश्रेणयः ।।

37. अस्मद्राग विवर्धनौषधमिदं पश्येति पूगद्रुमं
कण्ठाश्लेषपुरस्सरं च कथना त्ताम्बूलवल्या मिथ ।
भारस्रस्तपलाशगुच्छ विदलत्कान्तारकप्रच्यव-
न्मुक्ताश्चूर्णयतीव भाति ख¹पुरोऽश्मन्ते समीपस्थिते ।।

38. जलनीली जलवल्लि कैरवसरोजातच्छदैरावृता
बहिरन्तः कलहायमानशकुलैः कर्पूरगन्धोत्कटाः ।
स्थलकल्पं जलकुक्कुटीकुटिलितग्रीवाभिरुद्यानगा
विलसन्त्यापतिताम्रपुष्पनिचयैः प्राचीनवारिह्लदाः ।।

39. सायं तन्नगराधिराज मुरभित्सद्मस्वनद्दुन्दुभि-
स्फायत्काहलिकाप्रतिध्वनिमतिं कुर्वन्ति कुञ्जोदरे ।
नूनं केलिवनीकुलायगमनप्रोत्तिष्ठदन्तस्सर
स्थायिश्वेतगरुद्गरुत्पटपटारावा विरावा अपि ।।

40. वाता वान्ति तदुत्तरालयगताम्भोजाक्षवक्षस्तुल-
स्यैकस्रङ्मकरन्दबिन्दुनिकरैर्नैवेद्यगन्धोत्करैः ।
छित्वा तापततिं तदग्रनटनप्रोद्योगसज्जीभव-
द्वेश्याऽऽवर्जितकैशिकच्युतकु³वश्रेणीकसञ्चालकाः ।।

1. अधिश्रयणी 2. पूगः 3. कुवलय

41. शमनाशापवमानताडितरमाकान्तालयप्रोन्नत-
ध्वजचामीकरकिङ्किणीकृतरवैर्द्रागुत्थितानां भिया ।
कनकाभ्रङ्कषसानुचम्पकलतानीडोद्भवानां रुतै
रुष आसीदिति दम्पती गतरुषौ युङ्क्तः कदाचिन्निशि ॥

42. रक्षन्त्योऽङ्गणशोष्यधान्यनिचयांस्तद्द्राविडीकन्यकाः
पुर्यां तन्मधुवैरिगेहहरिणीशाबान्मुहुः खादतः ।
श्रव्यैश्शेखरयोग्यहल्लकलसन्माल्यैरधोन्यस्त त-
त्पल्लीयौवत नीतवेत्रपुटिकान्तस्स्थैर्निरस्यन्त्यहो ॥

43. अभ्येत्य दण्डवत्प्रणिपत्य पाद्यं च
नारिकेलकटासनं वितीर्य
विस्तार्य सुविशाल कदलीपला शानि
[1]खापुरदर्वीचयं निधाय
शाल्यन्नसूपाज्य धाराः फलक्षीर-
सुव्यञ्जनदधीनि च परिविष्य ।

भुक्तेषु तेषु चाचान्तेषु पदयुगं
संवाह्य ताम्बूलमपि निवेद्य
कुशलमापृच्छ्य यानस्तुतान् सुदूर-
मनुसरन्ति यथासम्पदुपचरन्ति
अतिथिषु गतेषु चिन्तयाऽऽयान्ति तत्र
भागवतशेखरा भागवतजनेषु ॥

1. पूग

## विष्णुचित्तवर्णनम्

44. तत्रास्ते द्वयसद्मपद्मवदनो द्वन्द्वातिगोऽश्रान्तयो-
गान्दूबद्धमधुद्विषन्मदगजोऽन्वर्थाभिधानाञ्चितः ।
छन्दोबृन्दतदन्तवागपठनेनापि स्वतोजन्यनि-
स्पन्द द्वैत सुसंविदा निलयिन श्रीविष्णुचित्तो महान् ।।

45. स त्र महीसुरवरः परमेश्वर प्रसादादासादितायां बहुजन-नकृत सुकृतफलरूपिण्या आचार्यकरुणायां, पुराजन्मकृतगुप्त-दत्त्यामिव निधानं, बोधयन्त्या प्रकृतेः परं आत्मानं आत्मनश्च परं परमेश्वरम् ।

"आत्मीय तदीय शेषशेषित्वसम्बन्धः अनादि" रिति विज्ञाय, समुपजातैतादृशज्ञानस्य अखर्वनिर्वृतिसुखमुपलभ्य सुखिन. परमयोगिनः कि कार्यं बहुक्लेशकराभिर्विद्याभिः ?

एतादृशज्ञान विधुरस्य हेतुवादा धातुवादा.; काणादः प्राणादः; कापिलश्चापलः; मीमांसा हिंसा; व्याकरणमशरणं किल; कि च, उपक्रान्तस्य तु पठनाय कालो नालम्; अखि-लोद्यमघ्नाः विघ्नाः; आनुकूल्यं च तावदेव;

अधीयमाने च अल्पे, संजायते मदः; अधीतसर्वस्वतया समुत्पन्नतत्त्वावबोधेन आनीतधान्येन निष्फलं पलालमिव, आलब्धमधुना सिक्थकमिव, त्र्यैगुण्यविषयाणि सर्वाणि शास्त्राणि नूनं दूरापास्यानि ।

अतः शान्तिदान्तिपरतया परमैकान्तिनो मम आदावधि-गमनेन, अन्ते विसर्जनेन च किमिव साधितम् ? वादिभञ्जनाय ? राजरञ्जनाय च कुतूहलिनां पुनः पुनर्जननसहिष्णूनां तदस्तु नाम ।

मादृशां तु तदीयख्यातिरीतिः, लाभः क्षोभः, पूजनमुद्वेजनम् ।''

इति निश्चित्य पूर्वमुर्वराया सौवीरोर्वीरमणप्रार्थनया गुरुत्वमनुमन्यमान, त प्रबोद्धच मुक्तिद इव भूसुरः दुर्विभाव्यबोधः, परमपदेऽपि भागवतानामप्राकृतबहुभद्रमूर्तिभिः भगवत्परिचर्याचरणमेव परमपुरुषार्थ.'' इति विज्ञाय ।

तत्रत्यरथचरणपाणिमालिकाकरणकैङ्कर्यमकुण्ठितकौतूहलेन कुर्वन्नासीत् । कि च,

46. न्यायार्जितैस्स वित्तैददाति भोजनमतन्द्रितो विप्रः ।
प्रालेयपटीराचल पदवी सञ्चारि वैष्णवजनेभ्यः ।।

47. धारास्यन्दि न भस्सु लाङ्गलिफलैश्शुष्कैर्निपीतोदकैः
निर्धूमश्रमदारपाचितकवोष्णान्नं च सूप घृतम् ।
द्रप्सं पर्पटिकानि चोपचतुराश्शाका वटीका मुदा
तण्डूभिर्वितुषार्द्रमुद्गकणिका वेवेष्टि घस्रेष्वसौ ।।

48. मन्दोष्णं धवलौदनं सुमधुरान् सारान् सुशीतं जलम्
निष्ठानानि च नारिकेळसलिलं पुण्ड्रेक्षुसारानपि ।
ग्रीष्मेऽपूपफलानि भोजयति साऽऽम्रक्षारकं भावितं
तक्रं चन्दनलेपपूर्वकमसावभ्यागतान् वैष्णवान् ।।

49. प्रत्यग्रौदन को¹लचूर्णकलितच्छूत्कार्युखा² शाक स
न्दोहान्, सर्षपचूर्णसङ्कलितनिष्ठानानि सुक्वाथितम् ।

1 मरी च 2. स्थालिः

गोक्षीरं, करतापनं नवघृतं, क्षीरान्नमुष्णोदकं
हेमन्ते स तु भोजयत्यतिथिसघातं बुभुक्षातुरम् ।।

50. हस्ते माधूकपिष्टोपरिगतकदलीपुष्पदर्वीषु तैलं
तद्गेहामत्रनिष्ठं रविसुतदिवसे यावदिच्छं गृहीत्वा ।
एकस्मिन्, लम्बमाने गुणयुतवसने धौतपूर्वे परस्मिन्,
गत्वा स्नात्वा च नद्यां, भवनमतिथयो वैष्णवा यन्ति तस्य ।।

51. श्रूयन्ते फणिराजतल्पचरितं दिव्यप्रबन्धानुस-
न्धानध्वान, "इहास्ति शाकबहुता ना, स्त्युष्णता नापि; नो
पूपो; नौदनसौष्ठव च, कृपया भोक्तव्य" मित्यादिकं
तन्निष्ठानिधिगेहसीमनि निशामध्येऽपि सम्भाषणम् ।।

52. एवं स वैष्णवानां
सश्रद्धाभक्तिवैष्णवप्रवरः ।
यो यल्लिप्सति तस्मै
तद्दत्वा तोषयति च तुष्यति च ।।

## मधुरापुरीवर्णनम्

53. एवं तस्मिन् कालं
नयति तदानीं बभूव मधुराख्या ।
दक्षिणदेशे नगरी
पाण्ड्यमहीमण्डलस्य मण्डनिता ।।

54. नूत्नमुक्ताहारपूतिगन्धं यन्नगरीस्त्रियः ।
हरन्ति कुचकुम्भानां घनसारपरीमलैः ।।

55. त्वङ्मात्रमुक्तागेहोपयुक्तशिष्टाश्च तत्पुरे ।
प्रेष्यन्ते परदेशानां ततः श्रीगन्धदारवः ।।

56. तत्पुरीसिंहलगजगन्धमारुत ताडितः ।
बिभेति चैत्रवेलायामुदीचीदिङ्मतङ्गजः ॥

57. धरन्त्यन्यमहीपालास्स्वीयाभरणराजिषु ।
तत्पुरी प्राङ्नृपोत्तंस भुक्तमुक्तहरिन्मणीन् ॥

58. सुग्रीवप्रेषितमहीधरतुङ्गवनौकसाम् ।
सुगमैर्हिरण्यमुक्ताखचिताररशोभितैः ॥

59. ज्ञायते दार्ढ्यमौन्नत्यं यस्या वप्रस्य गोपुरैः ।
भाति सान्द्रद्रुमधुरा मधुरा सा महापुरी ॥

60. शमनरिपुत्रिपुरभिदो-
द्यमवद्दोर्मुक्त वलयित सुमेरुः ।
किमिति भ्रमकृत्काञ्चन
दीप्रो वप्रो विराजते तस्याः ॥

61. अत्युन्नतत्वादति सूक्ष्मलक्ष्या
हेमप्रभाभि र्वरणाग्रपङ्क्तिः ।
विद्योतते विष्णुपदीयलक्ष्मी
ग्रीवाललच्चम्पकमालिकेव ॥

62. परिखावारिविहारलोलललनापीनस्तनद्वन्द्व स-
ङ्गत सङ्कूद्भव कस्तुरी मलयजव्यामिश्रगन्धोत्करैः ।
दिविषल्लोकतरङ्गिणीपवनभुग्लोके वहन्ती वह-
त्यनिदंपूर्वक भोगवत्युचितसंज्ञामर्थभारान्विताम् ॥

63. रसातलादुद्गतकाद्रवेया
बलेन धात्र्याक्रमणे प्रवृत्ताः ।
उत्प्लुत्य भूयः परिखाजलेषु
पतन्ति भीतास्तटगारुडेभ्यः ॥

64\. शैवालजलजपत्रैः
व्याप्तं खेयाम्बु मरकतच्छायम् ।
कनकयितु तत्सानुं
विधिपीडित ओषधीरसो नूनम् ॥

65\. आमूलादा च शृङ्ग पृथुकठिनशिलानिर्मिते व्योमचुम्बि
प्राकारे रक्षकौकोनिहितबहुशतघ्नीकरैर्द्राग्गृहीत्वा ।
गङ्गाधट्टी खुरल्यां सुरपतिनगरं मल्लमुद्धृत्य भूमौ
क्षेप्तुं बाभाति सज्जं नगरमिव समिद्रङ्गलब्धप्रतिष्ठम् ॥

66\. स्थूलग्रन्थिकवाटोरोवीक्ष्यचन्दनपट्टिका. ।
है[1]मानि भ्रमतस्तस्यास्सूर्येन्दू द्वारि सर्वदा ॥

67\. स्थिरसौधाग्रविहारियौवतरतिच्छिन्नाच्छहारस्फुर-
द्गुरुमुक्तास्सह च प्रसूननिचयैश्चेटीनिरस्ताः प्रगे ।
परिगृह्याम्बुधरा अधस्तलगता वर्षन्ति वर्षा स्वतः
खनिमाहुर्जलद, न चेज्जलनिधेर्ना[2]ना कुतस्तज्जनिः ॥

68\. गङ्गा सागरनीरचुम्बितपुरीतुङ्गालयच्छायनौ-
द्रव्याणां क्रयविक्रयाय वणिजस्त च्चन्द्रशालास्त्रियः ।
नून, वातचलत्तदीयनगरी स्वः केतु संश्लेषणं
वस्त्राणां परिवर्तनं प्रचलतीवाभाति सांयात्रिकैः ॥

69\. जालेभ्यो निशि तारका, गृहगता योषा गृहीतुं पिधा-
योद्युक्ता अरराणि "मौक्तिकधिया विध्येयुरेता" इति ।

1\. सौवर्णभूषणनि 2. विना

आमाराहववखेदनोदनमरुल्लिप्सारररोद्घाटनात्
स्थित्वोल्लोचविलम्बिहारमणिवन्निर्यान्ति ताराश्शनैः ।।

70. रागेणाश्रुतगर्जिता उपरिभूस्था मेघरञ्जन्यभि-
ख्येनाब्दाननुकृष्य केलिवलभीव्यासङ्गिन नीरवम् ।
कान्ताः केशकलापनिर्जितकलापौघाः कलापिव्रज
सम्मोदेन च नर्तयन्ति रवणीकुर्वन्ति केकारवै

71. कूजत्किङ्किणिकैः गृहध्वजपटीक्षेपै पिधत्ते मुदा
नीचस्थामरपत्तनालयशिर. कुम्भाम्बु जातावलिम् ।
"कि वै तन्नगरीरमावलयनिस्स्वानोऽय" मित्युन्मुख
द्देवाधीशपुरीविलोचनचयं सञ्छादयन्तीव सा ।।

72. जीर्यत्सप्तर्षिदारप्रशमितकलहाश्चञ्चला ज्वालिकाभि
स्स्थाल्यात्त नेत्रयुग्मेञ्जन, मिनकिरणैर्विद्रुत सङ्कुकाये ।
धृत्वा, प्रत्यूषचान्द्री विकचकुवलयं कैशिके, स्वीयकान्तैः
रंरम्यन्ते निशान्ते कुवलयनयनाश्चन्द्रशालासु तस्याम् ।।

73. आच्छाद्यार्कप्रदीपं ध्वजपटदशया, वान्तधूपक्षपायां
यन्त्रोत्क्षिप्ताम्बुघर्मा कलखमधुरालापिनी गेहलक्ष्मीः ।
उच्चैश्शालालिनीता वहति च पटलप्रान्तदोर्भ्यां नितान्तं
तस्यां पुर्यां सुमेषुप्रदरहतनवोढासमं विष्णुपादम् ।।

74. सन्ध्याद्वयेऽप्यनुगता न हि मध्यमायां
अन्वेति मामरुणतेत्यरुणो हृदार्तिम् ।
तद्गोपुराग्रपरिकीलितपद्मराग-
रागावृतो गगनमध्यगतो जहाति ।।

75. सुचेलकाच्छादितपुष्पगुच्छ-
मूल्यं कियद्ब्रूहि लतानिभाङ्गि !
अनून सून स्तबकद्वयस्य
दातुं क ईष्टे ननु मूल्यमस्य ॥

76. किं सन्ति जात्य· प्रमदे ? सतीषु
का जातिचर्चा ननु ! पद्मिनीषु ।
सरोजगन्धः क्वनु पद्मनेत्रे
विनोपभोगं कथमैस्सुगन्धम् ॥

77. हा हारलिप्सा मम नास्ति, यच्छे·
किं केतकीं ? श्रोणिनिरस्तचक्रे ।
ततः परं नूनमवेक्षसे त्व
हा हारवैरस्यमपि प्रकामम् ॥

78. तत्पुष्पलाव्यः प्रसभं विटानां
हरन्ति चित्तानि सनर्मवाग्भिः ।
एवं चलापाङ्ग विलोकितैर्वि-
क्रीणन्ति पुष्पाणि समन्दहासैः ॥

79. शृण्वन्त्यः पल्लवानां सरसतमगिरो भिन्न वर्णैस्सुमैस्स्रक्
बध्नन्त्य. पुष्पलाव्यः, धजलहसितदृक्छोणकान्तिप्रसारान् ।
मत्वा मल्लीश्च रक्तोत्पलदल विसरं, सूचिभिर्व्योममात्रं
सीवित्वा, सूत्रमात्रं ददति च, नितरां यान्ति लज्जां च सद्यः ॥

80. भोक्तुस्त्वमेवाभि[1]हारिकेति तवाङ्क-
मभ्येमि फुल्लपद्मायताक्षि !

1. पुरः प्रयन्तवती

ब्रूहि यामामोद उत घटिकाद्वया-

मोदस्स्वदेत बिम्बाधरोष्ठि !

पृष्टा समाख्यासि पुष्पर्तुमेव र-

म्भोरु ! तावत्को नु वा सहेत ?

विकृति किमेति मत्पाणिसंस्पर्शेन

भूषकं तावकं ? हेमगात्रि !

इति च परिभाषिकामिनो रञ्जयन्ति

सिक्तजलशीकरैः पुष्पसेचनाय

दष्टचेलाञ्चला नयनान्तवान्त

कान्तिदम्भेन पुष्पलाव्यः स्मितेन ॥

81. "क्रीणीष्व तानी"ति दर्शयन्त्यो दन्त

कुन्दभायुतदृशा मोहयन्ति

"बहुमूल्यमि"ति यान्तमधरभङ्गक्रोध

दृग्भिर्विटवि निवर्तयन्ति

"तानि विनैतानि रम्याणि न तवे"ति

सापत्न भाषितै प्रीणयन्ति ।

सविलासवीक्षण सस्मितभाषितैः

पणयन्ति निगदितेन क्रयेण

चतुरवचनविलासाङ्गसौष्ठवैश्च

पूर्वदत्तपणानि विस्मारयन्ति

ग्राहयन्ति च तत्र तैः पुष्पलावि-

काः सुमशराणि रतिरिव मनसिजेन ॥

82. कुङ्कुमपङ्कसङ्कलितचेलकभा दिवसान्तरक्ति मा

साङ्कवसम्पुटं द्विरददन्तमयन्तु शशाङ्कमण्डलम् ।

तारकजालकाविपुलचन्द्रकलाश्शशिकान्तवेदिकाऽऽ
सीन पणिन्त्य आबभुरनेकशरीरपितृप्रसूरित्र ।।

88. श्रुत्वा हास्तिपकस्य वारणरव धूनोति शुण्डा दिवि
व्योमोद्भेदकतोत्रघातकुपितं स्वं ताडयन्तं मुहुः ।
बद्धैरेव पदैश्च धावयति तं पूर्द्वारभित्ति प्रति
शैत्याद्गोपुरवेदिकेति च विदन् तत्स्थान् जिघृक्षत्यपि ।।

84. सन्ताड्यमानडिण्डिम
वादझरीभूतगण्डलघुदानम् ।
हास्तिकमिदं शिलाभि.
प्रहरत्यसकृच्च डैण्डिमिकम् ।।

85. अथ च प्रविशति नगरी
दर्शदर्श कथञ्चिदपि परितः ।
मदकलमतङ्गजघटा
करिणी मार्गानुगामिनी रागात् ।।

86. उत्क्षिप्तेषु रजोव्रजेषु सततं नीडोद्भव त्रोटिद-
ट्टालानद्रुमसस्यनिर्गलितबीजौघे कराम्बूत्करैः ।
सञ्जाताङ्कुरपल्लवे च चरमे काये मदेभव्रजा
उद्यानेषु चरन्ति जीवसहिता वेला नगेन्द्रा इव

87. मौनिक्रोधगतच्छदैरपि सहास्माभि पतत्त्रैर्युता
धावेतेति" ति "शरान् सरीसृप समान् पार्श्वस्थतूण स्थितान्"
लोलाकेरकदृक्प्रसारमुदयड्डिण्डीरहासैर्मुखै
राजानेयचया ह्वसन्त इव तत्पुर्यामजय्या जवे ।।

88. नूनं बध्नन्ति बाणासनमपि शरधीन् सादिनस्तत्प्रयुक्ताः
पश्चादेवानुधावन्त्यधिक तरजवान्काममस्मान्कलम्बाः ।

तेषामङ्के पतेयुः क्वचिदपि चरमे सादिनां चेति चिन्ता-
क्रान्तास्सन्ताडयन्ति क्षितितलमनिशं तत्तुरङ्गाः खुराग्रैः ॥

८९. पादेन मारुतगणो विजितस्समानो
जातो जवोष्मणि न ह्रीत्ययशो हयानाम् ।
निःश्वास मारुततरो[1] मलिनायमान
तन्माणिबन्धमुकुरेषु चकास्ति नूनम् ॥

९०. "आरोहेऽलघिमाऽयशोऽङ्कवलय द्वन्द्वेन सञ्जायते
धारासु स्पृशतः पदाववनिमित्यातङ्क उत्पद्यते ।
किं कुर्मो वयमि"त्युदेति हि मनोग्लानिः पुरीसादिना-
मश्वैर्बाह्लिकपारशीकशकघरारट्ट घोट्टाणकैः ॥

९१. कबरीविमोक्षणात्पदपद्मपातेन
बम्भरा आसां हि कुन्तलन्ति
कुटिलमुत्पतनेन पतनेन लोचन-
युगलन्ति हि शफरयुग्मकानि
दृढमानसस्य समाकर्षणादपि
गण्डीभवन्ति हि दर्पणानि ।

मध्याम्बरोपरि स्फुरणाद्धि वक्षोज-
युगलन्ति चक्रवाकद्वयानि
चलनमात्रेण परिमलविकिरणेन
कुसुमवीरुध एव गात्रीभवन्ति
नूनमिति नुतिपात्राणि तत्पुरीस्थ-
सुरतवैयात्यचणपण्ययौवतानि ॥

1. तरः=जनः

९२. प्रततप्रान्तपिशङ्गकुङ्कुमजटापालीकुरङ्गीमदाऽ-
सितवीणाऽलिकलस्वना त्सुरुचिराः कर्पूरखण्डव्रजाः ।
तरुणानां धुरि नारदत्वमभितः प्रत्यक्षमातन्वते
नगरे, तेन लतान्त मार्गण रणोन्मादः कथ शाम्यति ।।

९३. निषादवाटी समभूत्त्रिशङ्कुना
न साम्प्रतं वास इहेति पुष्करम् ।
विमुच्य ताराग्रहऋक्षसन्तति
विराजते ऋय्यमणीमिषात्पुरे ।।

९४. चिरसम्पादितपावकः करगतश्शाम्येत्किमाहो, कृताऽ
ध्वरताधिष्ठितहव्यवाहनतया वा, तत्र वेदाद्रयः
जपयज्ञप्रवणा. करप्रसरणं नापीन्द्रयक्षेश्वर-
प्रमुखावर्जित दानजीवनकृते कुर्वन्ति भूमीसुराः ।।

९५. दानेष्वेव कराञ्जलि च, कवचं मन्त्रेषु गृह्णन्ति रा-
ट्पुत्रास्तत्र तु शम्बसन्निभभुजानिर्धूतवैरिव्रजाः ।
नो जन्येषु, महीपदत्तधरणीखण्डे खुरल्यां हिरुक्
लुण्ठन्ते, न हि मृत्तिका, स्वकलुषा धीरा विवेकान्विताः ।।

९६. दम्भापेत वितीर्णतोयसततोत्सेकेन हट्टस्थित-
स्तम्भाः पल्लविता अमी' ति मतिमातन्वन्ति तस्या पुरि ।
धर्मैकार्जित वित्तकोटि शिखरस्तोमध्वजा अम्बुद-
श्रेणीच्छादिनवांशुका हि वणिजा नित्यं वरीवर्धिताः ।।

९७. नृपपदहलरेखाना
मूलं त्वस्मद्भुजाग्रहलरेखाः ।
इति भान्ति तत्र शूद्रा
बहुधान्यास्सुजनभजननिर्णिद्राः ।।

१४. मदगन्धभेद जिज्ञासयेवान्तक
तद्गजगण्डस्थलानि कषति
दर्शनासह इव कान्तामृदुकपोल
रतिजन्यघर्मोदकानि हरति
प्राणद इव गन्धवहनेच्छया शीर्ण-
मृगनाभिभस्त्रासु बम्भ्रमीति ।

अहितपन्नगभेदिन इति गेहविटङ्क
बर्हिपिञ्छानीव फुल्लयति च
पुष्पदन्त समारुह्य मलयशिखरि-
गन्धवाहः पुरीवस्तुदर्शनाय
मन्दगमनेन रथ्यासु निष्कुटेषु
जङ्गमीतीव तत्र सर्वत्र चापि ।।

**मत्स्यध्वजः**

१९. द्विद्वयोपायधीविद्वन्मतङ्गजः
षाड्गुण्य चातुर्य वित्तमश्च
मुद्रणग्रन्थित कनकाचलः केलि
शैलितश्रीखण्डभूमिभृच्च
अन्दूनिबद्धाब्दबृन्द मतङ्गजो
वनधिबन्धननूत्नराघवश्च ।

ताम्रपर्णीजलकेलीमरालश्च
लङ्केशमैत्रीप्रियङ्करश्च
स्वस्तिकृद्वास्तुवस्तुत्यगस्तिरिन्द्र
मकुटमोटनपटुतरमार्गणश्च

पाण्ड्यमत्स्यध्वजो मन्त्रवशगभूत
निवह ईश्वरतुल्यः पुरं तदवति ॥

100. नीतेर्भ्रंस्यति नैव भूपतिरसौ, सोमान्वयालङ्कृतिः,
नादत्ते प्रकृतीः प्रपीड्य कर,मप्याकर्ण्य कुत्सावचः ।
अन्येभ्यो न हिनस्ति चापि, विमनीभूयापरं जित्वरो
नो भीरु परिभाषते, नमयति स्व मस्तकं प्रस्तुतः ॥

101. पाटीरगिरिवनीवाटीषु सञ्चरन्
अहिभय न हि किञ्चिदपि च वेत्ति
सुमितवा गविकत्थ नोपिच रणयुक्ति
भाषणे शात्रवानपि भनक्ति
महिमातिशयितोऽपि मधुरास्पदोऽप्यसौ
लावण्यकलनयोल्लासमेति ।

ताम्रपर्णीप्रभूभूयापि सज्जन
गोष्ठ्या ह्यनञ्जनतामुपैति
विषधिलहरिभिदोत्पतत्पृषतजटिल
वलदुरुक्रमतिमिवालसन्निभेन
समरतलपरकरिशिरस्स्थल समुत्थ
बहुलमुक्ताऽविमुक्तासिना विभाति ॥

102. दानत्यागपतत्रयुक्तधरणीभृत्कीर्ति हसी चर-
त्याकाशे प्रथमच्छदेऽपि तिमिते रित्यॅ च धारौदकैः ।
नीरार्देऽपि गरुद्द्वयेऽपि डयते तज्जातिरन्यासमं
तस्या अन्य पतत्त्रवद्दिवि गतिः कुण्ठी भवेत्किं क्वचित् ? ॥

108. वाराङ्गनागारकारासु शुकचया
शृङ्खलाबन्ध बन्दीभवन्ति

जनशून्यरिपुपुरी प्रासादवाटीषु
गिरिकानिकायास्समुत्पतन्ति

अन्योन्य मायोधनासक्तपार्थिवा-
स्तत्पादकटकलीना भवन्ति

निजबलेभस्पर्धि मत्तान्यगजगण्ड
भित्तिष्वनावृष्टिरैक्यमेति

लीयते दानसमयेषु तत्करेऽति
वृष्टि रात्मप्रतापाग्नि कीलिकासु
दह्यमाने रिपुव्रजे मिनति शलभ
समुदयः पाण्ड्य भूमिपेऽवतिनिरीति

104. एवं मत्स्यध्वज महीबल्लभस्साम्राज्यवैभवमनुभवति स्म ।

105. श्री कृष्णराजरचितान्ध्र महाप्रबन्धे
श्रीशेषशर्मकविना परिवर्तितेऽस्मिन् ।
सौपर्ववाचि पुरवर्णननामधेय
माद्यं विलोकयतु सर्गमिमं बुधौध. ।।

इति पण्डितप्रकाण्डस्य श्रीकुण्टिमद्दितिरुमल श्रीनिवासाचार्यस्य पौत्रेण शेषशर्मणा सस्कृतीकृते आमुक्तमाल्यदाभिधाने महाकाव्ये प्रथमस्सर्गः ।।



## ।। द्वितीयस्सर्गः ।।

# ग्रीष्मर्तु वर्णनम्

1. पाटलवसुन्धरारुह भागधेय
मातलमरीचिकाम्बु वर्षागमश्च ।
शाल्मलीफल विदलन धूर्वहश्च
सरभसं भुवि ग्रीष्म आविर्बभूव ।।

2. शीर्यति पाषाणसान्द्र शैवलजाल
मन्तरिते झरवेणिवारि
शाकुनिकावर्जिताम्बु विष्वग्भाति
नष्टेषु पल्वलजीवनेषु
धूम्योत्थदवदग्ध तरुदलानि कपोत
बुद्धया जिघृक्षन्ति पत्रिणोऽपि
निद्रिताध्वगचयादृच्छाय मनुसृत्य
तापासहिष्णुतया लुठन्ति
क्षेत्रपालार्थधौत प्रसारिताच्छ
वस्त्रतीर्थीभवन्ति सर्वा दिशश्य
पाण्डुरन्ति मरीचिभिर्भूमयोऽपि
रविकरम्लानवद्भान्ति दिङ्मुखानि ।।

3. नश्येयुः किरयो द्विपाश्च महिषा अस्मिंस्तपे नूनमि
त्यम्भोजप्रभवो निषद्वरमुपर्यालिप्य तेषां पुनः ।
सृष्टयै वारुणदिक्समीर परिपुष्टार्कांशुवैश्वानरे
मूषाः किन्नु पिपक्षतीति मतिमातन्वन्ति तत्कर्दमाः ॥

4. दवधूम्यातिमिरे स्वकीयसलिलद्रव्यं त्वदीयाः करा
अहरन्नम्बुजबान्धवेति गदितु शून्या महादीर्धिकाः ।
दिवि यान्तीव विभान्ति चञ्चलतृणैरग्रे भृशं सङ्कुला
उपरि स्थूलतरास्समीरजव संभ्रान्ता रजस्सञ्चयाः ॥

5. पाश्चात्योष्णसमीरभुक्तिविमुखान् कुम्भीनसप्रग्रहान्
शश्वद्ग्रन्थिपरिच्युतान् दिनमणेर्यन्ता नियन्तुं मुहुः ।
यानं नूनमहो नियच्छति रवेराज्ञा वहन्नेव त-
न्नैदाघीयदिनप्रमाणमयते नून तमां दीर्घताम् ॥

6. तरणिखरकिरणवह्नौ
दहति जगज्जात भूतिरिव न भसि ।
पवनेन हता परिणत
मोचाफलसञ्चयो भ्रमति ॥

7. भरितनिजाम्बुबिम्बितविभाकरबिम्बविजृम्भितप्रभा
वलयितपान्थपालिकृतकूपकराजिचया विरेजिरे ।
जलधिवियोगसञ्जनित तापनिवारणकाङ्क्षवाहिनी
युवति जनात्मदेहधृतनिर्मलमौक्तिकगोस्त ना इव ॥

1. हार भेदः

8. सन्धानं जलराशिना रचितवान्वर्षासु मेघः पुरा
सन्दध्यात्पुनरप्यसाविति धियोपग्राह्य नि²ष्कोच्चयम् ।
पर्जन्याय समुच्छ्रिते करयुगैर्निर्वारिकूलङ्कषाः
यच्छन्तीव वराटकैश्च विलसन्त्यृम्नाल नम्रच्छदैः ।।

9. आशुष्कशैवालविरसकण्ठा अपि
गण्डकगन्धेन नापयान्ति
आतीरमापरतीरं क्रमन्तश्च
शङ्खनका न्शिशुका नदन्ति
कटके पदं दशत्युड्डीय च तमेव
कुट्टन्ति चञ्च्वा च भक्षयन्ति
श्या³माक क्षेत्र तुल्याब्जिनी निर्जल
⁴वप्रे खरातपादपनुदन्ति
ये तु, तद्वक जानुदघ्नति सरस्सु
जीवनं; गोधिका इव सञ्चरन्ति
निद्सु गोमय क्रिमिकीट खादनाय
शिशुमारा; विशारा बिलानि यन्ति ।।

10. पृथूनादौ मत्स्यान् रविकरविशीर्णेऽथ बहुधा
गृहीत्वा जम्बाले; कुमुदवबपादाननु शनैः ।
बकोटा डात्कूटान् सह सरसपङ्केन विजले
ग्रसन्ते वेशन्ते शकुलकुलकोशानपि तदा ।।

11. श्रोतुं रम्यतमा निदाघसमये कल्येषु कुम्भोम्भनो
द्भूताम्भोनिनदे मृदङ्गति, तदीयाराममध्यस्थले ।

1. दीनारः 2. अुपहार 3. धान्यविशेषः 4. क्षेत्रे

वातोत्कम्पितपाटला विनिगलत्पुष्पाम्बुकुल्या बहु
स्रोतस्सन्धिचयेऽन्धुयन्त्रनतिकृत्प्रोद्गीतगीतस्वनाः ॥

12. चण्डरवि किरण तापित
मल्ली बल्ली निकुञ्ज निचयेषु ।
कोशा लसन्ति पावक
जनिता इव बुद्बुदा घना भुग्नाः ॥

13. आवर्त कमलानि शैवलचयं चक्राश्च फेनव्रजं
नाभी लोचन केशपाश पृथुलोरोजस्मितब्याजतः ।
नैदाघीयभिया निगूह्य सलिल भाण्डेषु सृष्टचै पुनः
गोपायज्जलदेवता इव प्रपाकान्ताङ्मृद तन्वते ।

14. तपभीतशरणार्थिगङ्गा सयमुनेव
मल्लचञ्चित प्रवेणी विभाति;
हृतवृत्तभाग्यं प्रयच्छेत्यु[1]खा· कुचा
इव निमज्जन्ति भाण्डोदरेषु;
धारास्फुरन्नेत्रदीधितिर्वासितो
त्पलपत्रपतनशङ्कां तनोति;
शीर्षकम्पो मुखाम्भोजभास्तुतिरिति
स्मितमनुधारमानन्दयति च;
इत्यमध्वगजलदातृयुवतिमङ्ग
जः प्रपां पङ्गुरन्यत्र, नो जहाति;
किञ्च गृह्णाति पथिक वितीर्णवीटि
रूपशुल्कानि कामिनीकरयुगेन ॥

1. स्थाली

15. आयान्ति पानीयशालिका भेहा अत्तिकेऽम्बेति चातपनीरसेन
कामिनीकरवान्त शीतलपानीय मापिबन्तः श्रममपनुदन्ति
विस्मृत्य पूर्वोक्तदयनीयवाक्यानि पश्यन्ति कुचबाहुलोचनं च
उत्क्षिप्तलोचनाञ्जलिपुटैः कोमलवाहुमूलप्रभामापिबन्ति

निर्वृता अपि विस्तृतपाणिरन्ध्र
जालकाञ्जलिपानानि न विरमन्ति
येऽध्वनीना; विलोक्य तच्चेष्टितानि
परिहसन्ति च हेलया पालिकाश्च ॥

16. वासरातपतप्त भूम्यम्बरीष
तलविसारित इव कोकसञ्चयाय ।
पिष्टपूपस्समुद्गिरद्ग्रीष्मबाष्प
सन्ततिः पाण्डुरा कौमुदी चकास्ति ॥

17. आसाय वारिकेली विवशबिस भुजाद्वन्द्वदीव्यत्कपोणि
स्वांसन्यस्ताब्जहस्तं शिशिरधनकुचद्वन्द्व संघृष्टवत्सम् ।
आलस्याशुष्क कैश्यस्फुटनव कुसुमं नारि केल प्रस[1]न्न
गन्धोच्छवासां, प्रियां, स्वा, स्वांहृदयशयिता मेक चेलान्निशान्ते
सक्थिस्पर्शाविबुद्धा रमयति रमते भाग्यवाश्चन्द्रि कायाम् ॥

18. दम्पत्योरपि नूत्नयोर्हृदय सान्निध्येन दूरीकृताः
गाढक्रोड नियन्त्रणैश्च विधुरा आन्तर्यकार्यैश्च्युताः ।
वाक्यानुर्ययुता [2]वकेशि शिशिरोपायाः प्रचण्डातपे
दुष्टानामिव सम्भवन्ति नितरामूष्मागमे सङ्गमाः ॥

1, मद्यं, 2 वन्ध्या,

19. कान्तास्विन्न मुखाम्बुजोपरि विटैरावीज्यमानाः, स्मरे
णौशीरव्यजनैस्समीर शिशव. श्रान्तेन सांकं शनैः ।
ग्रीष्मे दुर्भर भास्करातपभिया पातालयानोन्मुखा
आनीता इवचौषधीश सविधं सौगन्ध्य पाटच्चराः ।।

20. जीर्णे चन्दनशैलमन्दपवने नामावशिष्टे तपे,
भूयः कल्पितचर्यया जनयितुं तं तालवृन्तव्रजाः ।
सन्नद्धा, जनितस्स एष तु तथा सत्यस्वरूपो न, कि
त्वद्धा कूटज एव, साक्ष्यमपि तन्मायूरपिञ्छ भ्रमः ।।

21. तस्मिन् घोरे ग्रीष्मे स्विन्नात्पाणेः प्रसूतवाणस्य ।
स्रस्तं दुर्ग्रहलस्तक मैक्षवमपतच्छरासन नु भुवि ।।

22. पी[1]नाहोपरि कामिनीनिहितपीनोरोजजं सौ[2]षिमं
भूत्वा किन्नु वितं[3]सवद्रविकरत्रस्तं, गतं जीवनम् ।
पातालं, पुनरानयत्यपरथा सन्दानिता रज्जवः
किं दक्षा'' इति कूपवारि चिरमाकृष्टं तनोत्युत्सवम् ।।

23. स्वनिदानोग्र निदाघवद्धिकसितामल्ल्यश्चिरण्टी कन-
त्कुटिलानील शिरोज कोटि दलने व्यग्राः, पुनः पाटलाः ।
घन निर्यन्मधुधारयानुपटवस्संयोजने तत्तथा
विगुणे, नैक समुद्रगर्भजनिते किं कालकूटामृते ।।

24. तारुण्यातिग चूत नूत्न फल युक्तै लाभिघार स्वन
द्धारा धूपित निर्जलाहृत झषच्छेदव्रजे जीर्यति ।
उद्गारारुचिमाच्छिनत्ति सुखिनां सन्ध्यासु केलीवनी
कुल्यासैकतमध्यलाङ्गलिफलान्तस्स्वादु शीतोदकम् ।।

1. कूपोपरि मुखबन्धः 2. शैत्यं, 3. बन्धनोपाय,

25. प्रतिसामन्तमहीपं
ग्रामे ग्रामे च निर्मितोल्लोचाः ।
शीतलयन्ति हसन्ती
मध्ये फुल्लानि पङ्कजानीव ।।

26. कचधृतनवमल्ली शोणचेलाभिरामा
कृतवनपरिरक्षाऽऽवासगन्तं प्रजालिः ।
विलसति बहुलाण्डा रक्तवर्णा पिपीली
सरणिरिव नितान्तं पुण्ड्रयन्त्राभिगन्त्री ।।

## विप्रमुखात् प्रास्ताविकपद्याकर्णनम्

27. तादृग्ग्रीष्मे मधुरा समीपवृषपर्वते हरेरासीत् ।
उडुपोत्सवः कदाचित्तस्मिन् परदेशि भूसुरः कश्चित् ।।

28. भक्त्या प्रणम्य माधवमथ मधुरा विभव दर्शनाकाङ्क्षी
वै[1]घाकृतसायाह्निक विधि स्तदवनिप पुरोध आवासे ।

29. परिपक्वमधुरसुगन्धिरम्भाफलै
रुरुपुष्ट कण्टकिफलदलैश्च
घृतपिण्डसन्निभखण्डित[2]कर्करी
नानाविधरसालफलचयैश्च
सुस्वादुगोस्तनी चारुगुलुच्छैश्च
निस्तुषति[3]मितमुद्गकदलैश्च ।
परिणतारुणरम्यमञ्जुदाडिमबीज
सुमधुरकान्ता[4]रक द्रवैश्च

1. इथिन्नढी 2. इक्षु 3. आर्द्र 4. इक्षु

अतिथिवर्गाय परिविष्ट पानकानि
स्वयमपि निपीय गन्धमालिप्य वपुषि
गर्भकीकृतमल्लिकास्रक् सिताभ्र
सहित ताम्बूलमपि ग्रसंश्चन्द्रिकासु ॥

30. शृङ्गाटकस्य वेद्यां बाडब्य सुभाषितानुलापी सन् ।
आसीदुपधानीकृतमस्त्रिश्शयितस्तदा नु मधुरायाम् ॥

81. प्रासादवासितां सूचयत्सु हिमाम्बु
सघृष्ट कस्तुरी परिमलेषु
पाटलानिलचञ्च लोष्णीष काग्रेषु
सुमगन्ध पातिनोऽलीन् क्षिपत्सु
कर्णभूषालोल मुक्तांशुषूत्सर्प
दुरुहार दीधितीरपनुदत्सु ।
उद्यद्विधुच्छविकरचेल पाणिस्थ
हेमत्सरावसौ प्रस्फुरति च
अग्रगग्रामगोप्यको वीटि पेट
दासिकानुगतो नृपो गच्छति स्म
मार्गमध्यगतान्तः पुरान्तरस्थ
चञ्चलानिभमोगिनी सङ्गमाय ॥

32. गच्छन् धरणीनायकतिलकश्शुश्राव तेन विप्रेण ।
परिपठ्यमानपद्यं संसृतिकान्तारचारिपाथेयम् ॥

33. वर्षार्थमष्टौ प्रयतेत मासान् निशार्थमर्ध दिवसे यतेत ।
वार्धक्यहेतोर्वयसा नवेन परत्र हेतोरिह जन्मना च ॥

34. श्रुत्वा कृत्वा चित्ते तदीयपद्यस्य भाव मनुतापम् ।
स जगाम कदर्थीकृतमात्मीयं जीवितं ध्यायन ॥

35. विरराम पण्यकान्तान्त. पुरगमनाद्विरम्य भवनं स्वम् ।
प्राप्य च विक्लबचेताश्शयने शयितो ममज्ज भावाब्धौ ॥

36. साम्राज्यं क्व नु ? कुत्र वैभवमिदं ? सौख्यानुभूतिः क्व वा ?
को वा सम्भ्रम एष ? बुद्बुदनिभं विश्वस्य गात्रं मुधा ।
नावैक्षे किल मोक्षपद्धतिमहो ! स्थित्वाऽऽयुगान्तं पुनः
मन्वादिप्रभवः किलान्तमगमन् कार्तन्तिदूतार्दिताः ॥

37. सगर हरिश्चन्द्रनलान् पुरूरवः कार्तवीर्यपुरुकुत्सान् ।
गयपृथुसुहोत्र भरतान् दिलीपशिबियौवनाश्वशशिबिन्दून् ॥

38. रन्तिमरुत्तभगीरथययात्यनङ्गाम्बरीषनरपालान् ।
भार्गवराम दशरथरामं चावक्रविक्रमोपेतान् ॥

39. कालः करालदंष्ट्राटङ्काग्रैश्चूर्णया चकार किल !
यस्तस्य मादृशानां का वा गणना तु वल्बजनिभानाम् ॥

40. तस्माच्चपलाचञ्चलकरणानन्दानुभूतिलोलुपता ।
युक्ता न हि; परलोकानन्दाय यते क्षणादस्मात् ॥

41. इति निश्चित्य च तस्मै द्विजाय भृत्येन प्रेष्य ताम्बूलम् ।
सफलं सदक्षिणाकं सत[1]न्त्रकं तां नुनोद निशाम् ॥

42. उत्थाय परदिनेऽसौ काल्यानि च परिसमाप्य कृत्यानि ।
समितिं विवेश सूरीन् पप्रच्छैवं वसुन्धराधीश ॥

1. नवाम्बरम्

43. युष्मच्छास्त्राणि बुधास्समीक्ष्य निश्चित्य वदत 'को मोक्षम्
ईष्टे दातु' तं परमात्मानं यो निरूपयति तस्मै ॥

44. नागबला सुमसन्निभनिष्कोच्चयमुपहरामि नूनमहम् ।
इति निष्क भस्त्रिकां पुनरास्थान्यामाबबन्ध भूमीशः ॥

45. ता कालाहिसमानां दृष्ट्वा चैकैकशो बुधाऊचुः ।
शक्ति हरं विनायकमग्नि सूर्य निशाकरं विष्णुम् ॥

46. इत्थं वादे प्रचलति मधुरायां, तत्र धन्विनव्यपुरे ।
तुलसी सुगन्धिमालां समर्पयन्तं तु मूलमन्त्रेण ॥

47. हरिराह विष्णुचित्तं मृदुमधुरोदार सूनमाल्य निभाम् ।
वाचं मन्नारुः श्रीरमणी मणि मन्दिरायितोरस्कः ॥

48. गच्छ त्व मधुरापुरीं धनमते ! गत्वा च पाण्ड्यावनी-
पस्याहङ्कृति सङ्कुलोक्ति मुखरान् सूरीन् जयेस्संसदि ।
जित्वोद्घुष्य च मन्महत्त्वमपि, तच्छुल्कं हरस्वाहरन्
कुर्वीथा दययेहभोगविमुखं श्रीवैष्णवं तन्नृपम् ॥

49. इति वदति हरौ स कम्पिताङ्गः
सपुलकविग्रह साश्रुनेत्रयुग्मः ।
विनयविनमितः प्रणम्य साङ्गं
पुनरिदमाह च भक्तिमान् मुकुन्दम् ॥

50. स्वामिन्मामनधीतिनं बहुविधग्रन्थेषु जात्यन्धमा-
रामक्ष्माखननक्रिया विरचना कुद्दाल जात क्षतम् ।
त्वत्प्रासादपरा[1]चितं जनमिमं वादाय चेत्प्रेषयेः
भङ्गश्चेन्नृपसन्निधावपयशो नायाति कि तेन ते ॥

1. किङ्करः ।

51. गेह मार्ज्मि जलं हरामि वसनं धावामि पल्यङ्किका-
दण्डं चापि नहामि किं च कलये प्रालम्बिमालां सुमैः ।
गृह्णामि ध्वजमातपत्त्रमथवा वाल्लभ्यलभ्यं हरे !
दीपं प्रज्वलयामि, में कुत इमे वादा ? न किन्ते परे ? ॥

52. इत्युक्तवन्तं मनसाभिनन्द्य
मन्दस्मितः श्रीवदनं स पश्यन् ।
अनेन वादं ननु जापयामि
लोकस्व मत्प्राभवमित्यवादीत् ॥

53. का ते स्वेच्छा जोषं हे मुनिवर ! गच्छ; दु.खलक्ष्य त्वाम् ।
किं भूपसभे कुर्वे ? वदान्यथा माऽहमस्मि शिष्टस्य ॥

54. इति वदतः प्रतिवक्तुं नालमभूदेष गन्तुमनुमेने ।
स्वार्चकमदिशद्धरिरपि निर्वर्तय तत्प्रयाणमिति ॥

55. तस्याज्ञया कोशगृहात्पदार्थ-
जातं च पाथेयमुपाददेऽसौ ।
पल्यङ्किकां स्थानिकसंवितीर्णा
ययौ समारुह्य च किङ्करोढाम् ॥

56. प्रस्फीताश्व समूढैरभिमुख भस्त्री प्रपूर्ण सम्भारैः ।
एकाङ्गिनोऽनुगच्छन् राजार्थातिरसवीवधैश्चापि ॥

57. सहधर्मिणी भक्तिसन्दानितस्वादु
मुग्दपिष्टकृतानि गोलकानि
सद्योपभोगाय संस्कृत प्राचीन
सुपरिशुभ्रक्षेम तण्डुलानि

संशोधितं क[1]णा सामिगुडाबद्ध
सम्भारयुक्त चिञ्चाफलं च
कुम्भयुग्वीवध कोटी विलम्बित
सद्योघृतापूर्ण कर्करीश्च

माधवार्चोपकरणौघ पेटिकाश्च
[2]मथितवटिकास्समादाय शोष[3]णानि
विधिनिषेधज्ञ सात्तिन सात्तनकुल
जात श्रीवैष्णवा ययुस्तमनुसृत्य ।।

58. प्रविमलभक्तिलभ्य, परमेष्ठिमुखादिसुरेभ्य, संसृति
श्रमहरनामकीर्तन, मुरान्तक, पापतम स्तिषषांवते
जलनिधिकामिनी कमन, तामरसायतनेल, भवतहृ-
द्भ्रमतृणदान, भूयुवतिरञ्जन, वर्णजिता म्बुभृत्तनो ।।

59. दोर्धूर्धृतदुर्धरगोवर्धन, राधानुरागवर्धन कुशलिन्
[4]वार्धृषिकमुख्य, तृणकृत वार्धश्रवसैकनेत्र, वैकृतिचतुर ।।

60. द्रुहिणज मुखमौनिस्तोमनिस्तन्द्र भास्व-
द्दहर विहरमाणा ताम्रपादाम्बुजात ।
बहिरबहिरपार प्राणि कोटि प्रपूर्ण
स्तवनमहितवाणी माधुरी वेद्य[6]पर्ण ।।"

61. इति माधवनामगुण ग्रहण व्यापृतपवित्ररसनाकः ।
भूमीसुरकुलतिलको मधुरां प्रविवेशविष्णुचित्तोऽसौ ।।

1. जीरका 2. निर्जलदधि 3. शुष्कशलटवः 4. वृध्याजीवः 5. इन्द्रपुत्रः
5. वेदि + अपर्ण

62. आयान्त वदनस्फुरद्विमल भा सम्मोहित प्रेक्षकं
नित्य प्रस्तुतवाद भूमिपसभद्वास्थेन चाज्ञां विना ।
अन्तर्नीतमवेक्ष्य भूपतिमुखा उत्थाय सभ्या नमः
कृत्वा प्रोज्ज्वलरत्नकाञ्चन महापीठ्यामुपावेशयन् ।

63 सभाजितस्तैर्हृदयान्तर स्फुर-
द्धरिस्समालोक्य सभासदानसौ ।
जगाद जोष किमिद ? परे नु कि
वयं ? विवादश्चलताद्यथापुरम् ॥

64 इतीरयित्वा स सभा विपश्चिता
विवादसम्भाषणचातुरीं क्षणम् ।
समीक्ष्य तेषामियती च शेमुषी
हसन्मुखो भूमिपमित्थमब्रवीत् ॥

65. वयं विवक्षाम इलातलेश
माध्यस्थ्यमादाय वसेद्भवाश्चेत् ।
जगाद राजापि भवादृशाना
श्रोतु हि वाक्यानि सभा प्रवृत्ता ॥

66. तद्वाक्यमाकर्ण्य तत्रैकमभिमुखी-
कृत्य तत्प्रोक्तवाक्यान्यनूद्य
तद्दूषणानि निरूप्य शनैरेव
सभ्येषु साधुवादोन्मुखेषु
पार्श्वगानगणयन्नेकैकवचनेन
निग्रहस्थानानि समनुगृह्य ।
सद्योत्थवादानसम्भ्रमेण नियम्य
प्रथमस्य वादिनोऽभिमुखमेत्य

निगमसंहितासूत्रवाक्यैकतां नि-
रूप्य चात्ममतोत्तमत्वमपि सुष्ठु
संप्रतिष्ठाप्य सर्वं वेद्यविधया स
तं विजित्यानुजग्राह करुणया च ॥

67. त्वं किमवादीरेहीत्याहूयान्यं च पूर्वमिव जित्वा ।
एकैकश आयातान् वादे मूकीचकार सर्वान् सः ॥

68. प्रधानतो जातमिदं समस्तं
न हेतुभूतोऽस्ति हि कश्चिदीशः ।
इति ब्रुवाणं तु 'तदैक्षते' ति
श्रुत्या जिगाय प्रतिपादयन्त्या ॥

69. ईशोऽहमेवेति वदन्तमन्य
मीशस्य जीवस्य च भोग[1] एव ।
साम्यं, न जीवस्य जगत्क्रियायां
हेतुत्वसङ्गस्तु हि कश्चिदस्ति ॥

70. विपश्चिता तेन परेण सोऽश्नुते
समस्तकामानिति कीर्तनादपि ।
अभेदवादः श्रुतिवाक्यसम्मतः
कदापि नैवेति चकार निर्जितम् ॥

71. फलमत उत्पत्तेरिति सूत्रात्फलदायिनाऽपूर्वम् ।
इत्यगणयन्तमीश्वरमजयन्मीमांसकं द्विजप्रवरः ॥

1. भोगे+एव.

72. शास्त्रयोनित्व सूत्रेण नानुमानेन बुद्ध्यते ।
ब्रह्मेति दूषयामास पीलुवादिनमप्यसौ ।।

73. प्राकृतशरीरबद्धो ननेत्रगम्यो नृपो भवेद्ब्रह्म
इन्यनुपपत्तिसूत्रा दजय त्प्रत्यक्ष वादिनं चापि ।

74. नित्यो नित्यानामित्याम्नायेनावबुद्धयते ब्रह्म ।
क्षणिकं नेति प्रवदन् जिगाय सौगतविवादिनं विप्रः ।।

75. आदौ स नारायण एक आसीत्
ब्रह्मा न, नेशो, न हि रोदसी च ।
सूर्योऽपि नासीन्न हि चन्द्रमाश्च
न तारका नापि च वारि नाग्नि. ।।

76. इत्थं स्थिते स्यां बहुधा रमेय
नै कोह मित्याशयतस्स देवः ।
स्वेनैव सृष्टं चिदचिद्विवेशे
त्युद्गति वाणी नियत पुराणी ।।

77. आदित्यमध्यस्थित पूरुषोऽसौ
हिरण्मयश्मश्रुरथाक्षिणी तु ।
इत्याह तेनाक्षियुगेन युक्तः
परो; न तु त्र्यष्टसहस्रनेत्राः ।।

78. नारायण एवान्त
व्याप्य बहिस्तिष्ठतीत्याह ।
नारायण मारुणमपि
नारायण वाचकानि सर्वाणि ।।

79. इत्याह ततः परमो नारायण एव यान्योऽस्ति ।
आम्नात छान्दोग्ये रूपादिषु तत्समोऽस्ति नान्य इति ।।

80. अपहृतपाप्मा दिव्यो देवो नारायणस्त्वेकः ।
इत्युक्तेरपि नान्यः परमो नैवास्ति नैवास्ति ॥

81. किञ्चै तच्छृणु भूमिप !
सभासदाः शृणुत सावधान मिदम् ।
श्रुति निगदितमाख्यानं
परतत्त्वनिरूपकं नियतम् ॥

82. आसीत्पुरा दिवोदास तनयस्तु प्रतर्दनः ।
जामदग्न्य भयात्रस्तस्त्यक्तराज्य परिग्रहः ॥

83. विरक्त चित्तस्सर्वस्मिन् गेहे नार्यां धने वने ।
मोक्षापेक्ष्यप्यजानन् स रमानाथं जनार्दनम् ॥

84. ध्यायन्निन्द्रं तपस्तेपे कठोरनियमार्दितः ।
तस्मै प्रीतश्शचीनाथः प्रत्यक्षीभूय चाह तम् ॥

85. मामुपास्स्वेति तस्यार्थं निबोधत विपश्चितः ।
वामदेवप्रतीकाशो वामदेवो महातपाः ॥

86. मातृगर्भोल्बवासी सन् मनस्येव व्यचिन्तयत् ।
अहं मनुरहं सूर्यः कुक्षीवानप्यहं नु वै ॥

87. इति तस्यार्थगाम्भीर्यं निध्येयं सूक्ष्मदर्शिभिः ।
दृश्यमानमिदं क्षेत्रं पञ्चभूतविनिर्मितम् ॥

88. अचेतन च प्रत्यक्षं क्षेत्रज्ञाज्ञावशवदम् ।
शरीरान्तर्गतो जीवः क्षेत्रज्ञश्चिच्च चेतनः ॥

89. स्वस्वकर्मानुरूपेण तत्तत्तनुमुपाश्रितः ।
बद्धः, मुक्तस्त्वक्षररस्थन्क्षर, एतच्छरीरक. ॥

९0. परमात्मा रमानाथः सर्वभूतान्तरस्थित. ।
चिदचित्परमात्मेति त्रिकं, दृश्यमचित्पुनः ॥

91. तद्गतं चित् तदन्तस्थ परमात्मा न गोचरौ ।
द्वाविमौ प्राकृतदृशोर्नाम चैक यथायथम् ॥

९2. त्रितयस्यापि चैतस्य वाचक भवति ध्रुवम् ।
जगतः कारणं नैव चेतन., तद्गतः पुनः ॥

९8. देवदेवश एव स्यात्सकलात्मेति विश्रुतः ।
इति निश्चित्य मघवा मामुपास्स्वेत्युवाच ह ॥

94. प्रतर्दनं तु तत्रास्मच्छब्दो नैवेन्द्रवाचकः ।
किन्तु तच्चेतनान्तस्स्थ परमात्मैकवाचकः ॥

९5. पञ्चभूतानि चात्मापि तस्यैव परमात्मनः ।
शरीराणीति निर्णीत वेदान्तेषु समन्तत. ॥

96. तस्मादिन्द्रशरीरस्य तत्कायत्वे क्षतिर्न हि ।
प्रथितं सर्वशास्त्रेषु मोक्षदत्वं रमापतेः ॥

९7. त्रैवर्गिकफलाकाङ्क्षी ब्रह्मरुद्रेन्द्रभास्करान् ।
कामं भजतु, मोक्षार्थी नान्यं सेवेत माधवात् ॥

९8. पितामहस्य जगतः माता धाता पितामहः ।
गतिर्भर्ता प्रभुस्साक्षी निवासश्शरणं सुहृत् ॥

99. एवं जीवस्य चेशस्य सम्बन्धं प्राह पञ्चमः ।
वेदः त्रयीसारभूतः वेदान्तेषु च कीर्तितः ॥

100. नारायणपरत्वं वै जीवस्य प्रतिपादितम् ।
योगो नारायणस्यास्य प्रापकः श्रूयतामयम् ।।

101. इति शेषशर्मरचिते सुरगिर्यामुक्तमाल्यदाकाव्ये ।
द्वैतीयीकस्सर्गोऽवसितः श्रीविष्णुचित्त विजयाख्यः ।।

102. तिरुमलकुल तिलक श्रीनिवास बुध पौत्र कृत महाकाव्ये ।
विष्णुचित्तीयनाम्नि द्वितीय सर्गो हरेर्गुणादर्शः ।।

## ।। अथ तृतीयस्सर्गः ।।

# खाण्डिक्य केशिध्वजसंवादः

1. वभूव पूर्व निमिभूमिनाथ-
वंशो, यदीया जनकाभिधानाः ।
सर्वेऽपि, धर्मध्वजनामकोऽभूत्
तस्मिन् प्रशस्ते जनकान्ववाये ।।

2. मितध्वजाख्यश्च कृतध्वजाख्यो
धर्मध्वजक्षोणि भृतः कुमारौ ।
वसुन्धरामण्डल धूर्वहत्वे
पद्माक्षकल्पौ परिघप्रवेष्टौ ।।

3. मितध्वजोऽसू[2]यत धर्मकर्म
निर्वाह कर्मिष्ठतम कुमारम् ।
खाण्डिश्य मन्यः [1]रतत्त्वबिन्दु
केशिध्वजं नाम तनूजरत्नम् ।।

4. विभासमानौ नवयौवनेन
राज्याशयान्योन्यजिगीषया च ।

1. भुजौ 2. (दैवाहिको धातुः)

प्रजाहृदातङ्ककरं महोग्रं
वहून् दिनान् चक्रतुराहवं तौ ।।

5. नियुध्यतोरिक्षुमतीतटान्ते
व्यूही कृतानीककयोः प्रभाते ।
दिने दिने, क्षीणबलं न योध्दुं
शशाक खाण्डिक्यबलं परेण ।।

6. विजृम्भमाणोर्जित सैनिकं तं
केशिध्वजं नष्टबलोऽभिगन्तुम् ।
अशन्कुवन् संस्थितशिष्टसैन्यै
र्नी[1]सीरदेशात्प्रसभं दधाव ।।

7. सोऽपक्रान्तस्स[2]त्रा गुरुमन्त्रि भटैर्वनाद्वनं विचरन् ।
ग्रावाग्रनिहितचारः परिकल्प्य वृतिं तदन्तरुटजेषु ।।

8. कालं प्रतीक्षमाणः खादन् वनगतफलानि मूलानि ।
न्यवसत्, बलवानपि किं कुर्वीत विधौ तु विपरीते ।।

9. केशिध्वजश्चापि समीकलब्ध-
खाण्डिक्यराज्यो विजितेन्द्रियस्सन् ।
त्रिवर्गसौख्यं यव[3]साय मेने
जिगीषति स्म प्रभवं च मृत्युम् ।।

10. चकार यज्ञान् स फलानुषङ्गं
विना पुनर्जन्म निवृत्तिहेतोः ।

1. सेनामुखात् 2. सह 3. तृणाय

आधाय चित्तं परमे तु पुंसि
जग्राह दीक्षां सवनाय जातु ॥

11. तदीय यज्ञीय पशु कदाचित्
मखीयवाटी परितश्चचार ।
तरङ्गिणी तीर सनीडदेशे
कुञ्जेषु खादन् यवसं मनोज्ञम् ॥

12. ददर्श वैवस्वतकेतु तुल्यां
शार्दूल लाङ्गूल महाभुजङ्गीम् ।
उच्चैर्नदत्कन्धरघण्टमार्त
नाद प्रतिध्वानितदिग्दधावे ॥

13. धावन्तमग्रे न्यपतज्जवेन
दम्भोलिपातं पृथुपूतिगन्धिः ।
द्वीपी पयोदार्भटतुल्यनाद
विसंज्ञ भूमिज्युत गोपबालः ॥

14. अस्यन् पशुं निर्गलितद्रुपर्ण
जग्राह कण्ठे प्रसभं च बाढम् ।
अस्पर्शयन् स्वं खुरकोटि शृङ्गै
स्तं ताडयन् वालधितिग्मपातैः ॥

15. कवोष्णरक्तं गलनालनिर्यत्
पिबंश्चकर्षाचलकन्दराय ।
यावत्तु पश्यन्ति समीपसस्य
पाला निनादान् बहुकुर्वते च ॥

16. याबच्च विप्राः कृतसान्ध्यकृत्याः
आरुह्य भूमीरुह दीर्घ शाखाः ।
उच्चैः प्रकुर्वन्ति चपेटनादान्
धावन्ति यावज्जवसादिनोऽपि ।।

17. विहाय यज्ञीयपशु परासु
सशोणितं सृक्वलिहंश्च पश्चात् ।
मुहुश्च पश्यन् निनदन् प्रतस्थे
द्वीपी यथेच्छं गहनेऽतिसान्द्रे ।।

18. जना "वमन् कृत्तशिरोधिनालात्
असृक्, सह प्राणसमीरणैश्च ।
व्यत्यस्ततार निभृताक्षिगोलं
पशुर्ममारे" त्यवदन् महीपम् ।।

19. प्रायश्चित्तं स पप्रच्छ
ऋत्विजस्तेऽब्रुवन्नृपम् ।
अजानानाः, 'कशेरू त्वं पृच्छे'ति
स महीक्षिता–

20. अनुयुक्तस्तु शुनकमनुयुङ्ग्धीत्युवाच; सः ।
अवदत् "ऋत्विजो, नाहं, कशेरुर्जानिते नु ताम् ।।

21. वयमेव न; मेदिन्यां वेत्ति कोऽपि न मानवः ।
किन्तु सप्ताङ्गराज्यं य. तुभ्यं दत्त्वा वनाद्वनम् ।।

22. पर्वतात्पर्वतं चापि क्लिश्यन्नटति पुत्रकः ।
पितृव्यस्य तु ते वेद, खाण्डिक्यस्तं परन्तप ।।

23. अनुयुङ्क्ष्व महीजाने तुभ्यं यदि तु रोचते ।
श्रुत्वा तस्य वचो राजा मुनिं शुनकमब्रवीत् ॥

24. मुनिवर यदि पृष्टो मे पितृव्यस्य पुत्रो
हृदयनिहितवैरो निष्कृतिं मामनुक्त्वा ।
शरणमुपगतं मां मारयेद्वा वदेद्वा
भवति हि सफलं मे यज्ञतन्त्रं द्विधापि ॥

25. इत्युक्तवाक् पुष्परथं महीपो
निरायुधोऽसावजिनोत्तरीयः ।
आरुह्य, तद्वासवनं जगाम,
दृष्ट्वा चरास्तं स्वजनांश्चकन्दुः ॥

26. अनुस्वमायातजनान्विभीतान्
विनेतुमन्यान्विनियुज्य धीरान् ।
रन्ध्रेषु धानुष्कजनं च, रोषात्
खाण्डिक्यराजो निरगाद्वृते स्म. ॥

27. विद्युच्चञ्चलचापज्यारोपितशातरो[1]पोऽसौ ।
कम्पायमानबिम्बाधरदल एवं जगाद खाण्डिक्यः ॥

28. धान्यार्थैर्द्विरदाश्वगोरथचयैस्साकं समं मामकं
साम्राज्यं त्वहरः पुनश्चपलभुङ्मारी च मायावृतः ।
न्यङ्कुत्वग्वसनः प्रशान्त इव नः प्राणान् जिहीर्षुस्समा-
यातः किं ? कुटिलोऽसि, तिष्ठ, निशितैस्त्वां पातयाम्याशुगैः ॥

1. बाणः

29. इत्युक्तस्सोर्ध्वबाहुस्स्म वदति ननु भो आततायी तु नाह
श्रृणु, यज्ञीयः प्रमीतः पशुरयि समभूद्यज्ञविघ्नो द्वि जाल्या ।
अनुशिष्टो "निष्कृतेस्त्व विदुर" इति भवत्सन्निधि प्रेषितोऽहं
मयि रोपं वाथ कोपं जहिहि, मम सम तू भयं चार्यवर्य ।।

30. इति तस्य वचः श्रुत्वा तरुषण्डान्तरस्थलीम् ।
गत्वा सुहृत्पुरोधोभिर्मन्त्रयामास मन्त्रिभिः ।।

31. मन्त्रिण ऊचुस्स्वयमेत् भ्रातृव्यस्समय एष, न क्लेश. ।
मा बाधय त्वरेथा खादय मेतस्तु जीर्णपर्णानि ।।

32. दारा यान्ति लुनन्ति शाद्वलतले शाकानि नोकैस्सम
चाकर्षन्ति हठात्पदाम्बुजयुगे गाढंगतान् कण्टकान् ।
आक्रोशन्ति च, तान्निशम्य न दृशोर्निद्रापि नो रात्रिषु
स्यादेतत्किमलं वयं निगदितु क्लेशांस्त्वदी यानिमान् ।।

33. सप्ताङ्गेषु प्रधानाङ्गं स्वामी त्वङ्गीति साम्प्रतम् ।
यद्यङ्गी स्यात्सुखी सर्वाण्यङ्गान्यश्नुवते सुखम् ।।

34. हन्यायदि, त कथमप्येति त्वां राज्ययुग्ममपि नूनम् ।
अरिविजयधनसमार्जन जनावनानि हि महीभृतां धर्माः ।।

35. दुस्सहबलं विरोधिनमन्यायेनापि हन्तुरधिपस्य ।
धर्मग्लानेर्न्यायेनावन्यवनं हि निष्कृति र्भवति ।।

36. अवधीद्द्विजमाचार्य त्रिशीर्षमिन्द्रस्स्वराज्य आपन्ने ।
वैरिणि जहीहि करुणां का नु कृपा; दुःखभागिनि स्वजने ।।

37. तव साधोः पीडाकरमेनं हत्वा समागतं दुरितम् ।
इष्टापूर्तं राजन्न प्रभवसि किं विनाशयितुम् ?"

38· द्विश्रान् विलोक्य दिवसान् साहसमुररीकरोषि नो चेत्त्वम् ।।
ग्रामगमिनि सर्वजने मौनी स्या वा विहीनसन्धिर्वा ।।

39. परिभववह्नौ विदहति तपसा लोचर्नानिमीलनं मात्रम् ।
भवति न चैकाग्र्य स्यान्मनसो न ब्रह्मनिध्यानम् ।।

40. पितृघातुक नृपवश्यान् हत्वा भ्रूण, बभूव भृगुराम ।
मौनी, मास्तु प्रभुता, निर्यानिनमन्तरा शमः कि स्यात् ?"

41 चिन्ता विरोधरहिता, तुष्टा, लब्धेन, गेहितैव वरम् ।
न तु राजता यदीये वैराधी नश्यतो न शमथेन ।।

42. पुरमागतमक्षिरुजा मुक्तवा शार्दूलमथ गुहान्तस्स्थम् ।
स्वस्थं को नु जिघांसति हृदयभिदो क्षिप्त घोरनखरकरम् ।।

43. धर्म इत्यद्य मुक्वा, बलिनं त केन जेष्यसि च राज्यम् ।
केनाहस्स्युपायं तं वद संख्यानपूर्व मेष इति ।।

44. "शयित' कलिरुपविष्टो द्वापर, मुत्थितपुमांस्त्रेता ।
यायी कृतयुग"मिति न श्रुत मृग्ब्राह्मण पुरन्दरबचः किम् ? ।।

45. छिद्रेषु हन्ति, राष्ट्रोपद्रवमपहन्ति यः, श्रृणोत्याप्तम् ।
त्वरते काले,ऽकाले नोद्रिक्त,स्स चिरमवति भूवलयम् ।।

46. "उत्तिष्ठ जागृही"ति प्रवदत्सचिवान्विलोक्य स जगाद ।
अस्तु भवदीयवचनं काम ग्राह्यं तथापि श्रृणुतेदम् ।।

47. अनूमन्य भवद्वचनं यदि हन्यान्तं निरायुधं भूपम् ।
अस्माकमयं लोकः, तस्य स्वस्स्यात्तयोर्विमृश्यतां भेदः ।।

48. नित्यं परलोकसुखं, कतिपयदिनमात्र भोग्यमिह सौख्यम् ।
कृत्वाघं राज्यार्थे, परमादभ्रंशः किमुत्तमो वदत ।।

49. "कण्ड्वर्षिप्रोक्तमिद 'दीन बद्धाञ्जलिं गत शरणम् ।
मा हिंस्यात्परलोकार्जनकाङ्क्षी" त्येतदयि न हि ज्ञातम् ।।

50. इत्युक्तवा खाण्डिक्यो गत्वा चाकर्ण्य सवनभङ्ग विधाम् ।
तस्मात्स मामवादीत्तन्निष्कृतिमथ निशम्य स तु गत्वा ।।

51. साङ्ग समाप्य सवन चावभृथप्लवपवित्रमूर्धा स. ।
सभाव्य ऋत्विगादीन् सन्तोष्य च सूतमगधवन्द्यादीन् ।।

52. अभिमतमर्थं दत्त्वार्थिभ्योऽपि जगाम नैव सन्तृप्तिम् ।
गुरुदक्षिणा न दत्ता खाण्डिक्यायेति तद्वन स ययौ ।।

53. युद्धायायं समुपागत इति मोहेन सम्भ्रमति तस्मिन् ।
संरुद्ध्य, "करुणया ते समाप्तिमगमन्मदीयसवनन्तु ।।

54. गुरुदक्षिणा प्रदित्सुस्त्वामुपयातोऽस्मि काङ्क्षितं ब्रूहि ।
दास्यामीत्यवदत्तं सोऽपि पुनर्मन्त्रिभिस्सहित. ।।

55. आप्ता यूयं साधु समालोच्य ब्रूत तदुचितं स्यात् ।
इत्युक्ता धरणिपतिं सचिवा ऊचु. प्रमोदभरितास्ते ।।

56. "भाग्यं नोऽद्य फलोन्मुखं, वृणु चतुर्वाराशिवृत्तोर्वरां
निश्शेषां, गहनेऽन्नवस्त्रविकलान् दारैस्समं पुत्रकैः ।
तीक्ष्णग्रावकठोर कण्टकशिखादीर्णाङ्घ्रिपङ्केरुहै
रस्मान्पालय; बान्धवावनमृते धर्मोऽस्ति को वापरः ।।

1. सर्वां.

57. कदा सैन्योपेता धरणिप ! भवेमाथ समयः
कदा युक्तस्स्यान्नस्तदनु समरः किं समुचितः ।
जयो युद्धे साध्यः किमु ? तव पुरापुण्यवशत.
विना बन्धूच्छेदं स्वयमुपगतास्सम्पद इमाः ।।

58. इत्युक्तस्तु विहस्य किञ्चिदवदद्यूयं [1]हिरण्यागमो--
पायोपक्रमतन्त्र को विदवरा नूनं महासौख्यदम् ।
मोक्षं साधयितु न दक्षमतयो राज्यश्रियं चञ्चला
याचेयं किममु ? विहाय परमार्थज्ञानपाथोनिधिम् ।।

59. निमिवश सम्भवाना नः किमु राज्य प्रधानलक्ष्य स्यात् ? ।
योग विदेषोऽस्मात्किमु धरणेर्योगस्य वा वर वरणम् ।।

60. त्यजतैहिकलालसतामिति तान्निर्धूय खाण्डिक्यः ।
केशिध्वजोपकण्ठ समुपेत्य सगौरव मवादीत् ।।

61. नूनं यच्छसि निष्क्रयमित्यनुयुक्तेन तेन बाढमिति ।
प्रोक्तः खाण्डिक्योऽयौ केशिध्वजमाह वसुमतीनाथ ! ।।

62. अध्यात्मवेदिन् गुरुदक्षिणां त्वं
दित्सुर्यदि स्या अनुशाधि विद्याम् ।
पुनर्भवक्लेे विना शिनीं मां
नित्यं पदं प्रापयितु समर्थाम् ।।

63. आकार्ण्य तद्वाक्यमुवाच सोऽपि
मदीय साम्राज्यमहो विमुच्य ।

1. घनम्

अयाचथास्त्वं किमिमा प्रियंस्यात्
राज्यात्किमन्यन्मनुजाधिपस्य ।।

64. आकर्ण्य केशिध्वजवाक्यमेष
जगाद हेतुं श्रृणु वच्मि राजन् ।
जायेत भूमौ परिपालनेच्छा
मूढस्य, विज्ञस्य तु जातु नैव ।।

65. शत्रुञ्जयत्व जनपोषकत्व
राजन्यधर्मो न हि संशयोऽत्र ।
स्वधर्महानिर्दुरिताय न स्या–
ज्जितस्य युद्धे मम दुर्बलस्य ।।

66. बुधा न राज्यं स्पृहयन्ति किन्तु
मूढा अहङ्कारममत्वयुक्ताः ।
अस्मादृशाः कुत्र च कुत्र राज्य
इतीरयन्तं जनकस्त्वशंसत् ।।

67. अविद्ययाहं [1]भरणं तितीर्षु
इष्टानि कार्याणि समाचरामि ।
भोगेन पुण्यक्षयमातनोमि
प्रीतोऽस्मि तुभ्यं निमिवंश्यवर्यः ।।

68. वंशीयसौभाग्यवशेन राजन्
तत्त्वार्थलिप्सा तव सम्बभूव ।

1. संसृतिः

निबोध तत्त्वं प्रवदाम्यविद्या
विद्यां यथाप्रेष्ठगुरूपदिष्टम् ॥

69. क्षेत्रं जडं दृश्यमिद परस्य
जीवस्य विज्ञानमयस्य नार्थं ।
स्वत्वं ममत्वं च तथाविधऽस्मिन्
द्वयं त्वविद्याक्षितिजस्य बीजम् ॥

70. अज्ञानमुग्धो नरनाथ· देही
भूतात्मके कर्मवशेन देहे ।
बद्धोऽहमेवेदमिद ममेति
पारं न जानाति च बम्भ्रमीति ॥

71. आकाशवायु ज्वलनाम्बुभूभ्यो
जा ज्वल्यमान पृथगेव नित्यम् ।
जीव विना, को नु शरीरमेत-
दात्मेति मन्येत, न लोष्टबुद्धिः ॥

72. शरीरभोग्यानि निशान्तदार
केदार वित्ताम्बरवाहनानि ।
नूनं शरीरौपयिकानि, जीव-
परिग्रहा नैव कदाप्यमूनि ॥

73. तनूजपौत्रादिकसन्ततिश्च
विनाशिकायादुदिता न जीवात् ।
शारीरिकी स्यात्पुनरात्मनीना
न जातु तस्या कुत एष मोह. ॥

74. देहात्म भेदावगतेरनन्तर
जीवस्य न स्यात्सुखदु खसङ्गः ।

भित्तिर्यथा तिष्ठति लेपनेन
भोगेन कायः, कथमात्मनेऽयम् ।।

75. संसारी पथिकस्सहस्रजननप्रस्थानदीर्घीभव-
त्संसाराध्वनि मोहखेदविवशोऽसौ वासनाधूलिभिः ।
व्याप्तो गच्छति सन्ततं, मिलति चेद्विज्ञानकोष्णोदकं
तत्प्रक्षालनधूतमोहकलिलो बाधाविमुक्तो भवेत् ।।

76. तादृङ्मोहापगमे स शरीरी मुक्तसंसृतिर्भजते ।
नैजं सौख्यैकघनं निर्वाणपदं निरत्ययं विमलम् ।।

77. अल ञ्जरस्थं सलिलं तुषार
मनग्निसङ्गं मणिकानुषङ्गात् ।
क्वथेत तैक्ष्ण्यं च भजेत तद्व-
द्देही ममत्वं प्रकृतेरहन्ताम् ।।

78. जीवोक्षरो ज्ञानमयो विशुद्धः
विरुद्धधर्मान् प्रकृतेरुपैति ।
अविद्ययोपैति शरीरबन्ध
योगेन तत्सङ्गमपाकरोति ।।

79. तेनानुयुक्तः करुणापरीतः
स प्राह, "राजन् ! शृणु वच्मि योगम् ।
अपास्य भूयो जननं शरीरी
तद्ब्रह्मसायुज्यमुपैति येन" ।।

80. "मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धाय विषये सक्तं विरक्तं मुक्तये भवेत्" ।।

1. मणिक.

81. आकृष्य चित्तं विषयादिसङ्घात्
ज्ञानेन, बाढं परमे निवेश्य ।
निःश्रेयसार्थी सततं परेशं
ध्यायेदमुष्मै भगवान्प्रसीदेत् ॥

82. तस्मै प्रसन्नो भगवान् स्वकीय
ददाति साम्य परमं दयालु ।
नाकृष्य किं चुम्बक आतनोति
कालायसं स्वेन समानधर्मम् ? ॥

83. यमादिभिस्सत्त्वगुणप्रधानै-
र्मनः प्रवृत्तेः परमं पुराणम् ।
नूनं शरव्यीकरणं तु योग,
तद्योगिनं योगिनमाहुरार्याः ॥

84. योगिना समनुष्ठेयं मनोनैर्मल्यसिद्धये ।
पञ्चकं ब्रह्मचर्यादि स्वाध्यायादि च पञ्चकम् ॥

85. एतैरेव स कामस्तु विशिष्ट फलमश्नुते ।
निष्कामो मुक्तिमाप्नोति नूनं ससार सागरात् ॥

86 यमादीनपरित्यज्य भद्रादिष्वेकमासनम् ।
आलम्ब्य प्राणपवनमभ्यासेन वशं नयेत् ॥

87. प्राणायामस्य एव स्यात्स द्विधा परिकीर्तितः ।
सबीजाबीज भेदेन; पुनश्चासौ त्रिधा भवेत् ॥

88. प्राणापानमिथोरोधाद्द्वयोरपि निरोधत. ।
रेचकादिवशेनापि साधनीयो मुमुक्षुणा ॥

89. स्थूलरूपावलम्बी तु स बीजोऽन्यस्त्वबीजकः ।
अवश्यं समनुष्ठेयः प्रत्याहारो मुमुक्षुणा ॥

90. विषयव्यापृतं बाह्यमिन्द्रियाणां तु पञ्चकम् ।
मानसाधीनकरणं प्रत्याहारं प्रचक्षते ॥

91. चञ्चलेन्द्रिय सङ्घात वशीकरण साधनम् ।
प्रत्याहारं विना योगसाधको न भविष्यति ॥

92. प्राणायामेन पवनं प्रत्याहारेण चेन्द्रियम् ।
वशीकृत्य ततश्चित्तं निदधीत सुभाश्रये ॥

93. केशिध्वजोक्तं स निशम्य तुष्टः
पप्रच्छ भूयोऽपि बुभुत्सुरित्थम् ।
शुभाश्रयः कस्सकलाश्रयः कः ?
दुःखं महद्यन्मननेन नश्येत् ॥

94. स प्राह "चित्तस्य समाश्रयस्तु
ब्रह्मैव राजन् भवति द्विधा तत् ।
परं तथा स्यादपरं च, पूर्व-
ममूर्तमाहुस्त्वपरं च मूर्तम् ॥

95. तत्र परात्मकं ब्रह्म अमूर्तम्, प्राकृतसम्बन्धवर्जितं च । अपरमाचतुर्मुखस्तम्बपर्यन्तं प्राकृतशृंङ्खला निबद्धं मूर्तं च ।

यद्यप्येतन्मूर्तमथापि भावनात्रय विशिष्टमिति नोपास्यं मुमुक्षुभिः ।

96. भावनापि ब्रह्मभावना, कर्मभावना, उभय भावनेति त्रिधा । तत्र सनन्दनादयो ब्रह्मभावनापराः, देवादिस्थावरान्ताः कर्मभावनापराः । हिरण्य गर्भादयस्तु उभयभावनानिष्ठाः ।

97. भावनात्रयविशिष्टमिति त्रिविधात्मकमिदं अपरं ब्रह्म मोपास्यमित्युक्तम् । सनन्दनादयः प्राग्ब्रह्मकल्पे प्रकृतिबद्धाः । एतद्भावनात्रय रूपविश्वस्य अवधिः देवमनुष्यादि विशेषज्ञान-कर्मणां विनाश एव । एतादृशक्षीयमाण ज्ञानकर्म विशिष्ट हिरण्यगर्भादिरूपं विश्वं अपरं मूर्तिमत् ।

98. एतद्विलक्षणं पूर्वोक्त देवादिभेदरहितं, अत एव इदमित्थ-मिति निरूपयितुमशक्यम्, अपक्षयादिरहितं ज्ञानशब्दाभिधेयं स्वयं ब्रह्मात्मकत्वाद्ब्रह्म संज्ञा संज्ञेयम् । एवंरूपमेतत् परं ब्रह्म भावनात्रयात्मक विश्ववैलक्षण्यलक्षणं अभ्यस्यमानयोगस्य योगिन उपासनाशक्यम् ।

99. किंच, अपरमिति यदुक्त हिरण्यगर्भवासव प्रजापतिमरु-द्वसुरुद्रादित्य तारकाग्रह गन्धर्वयक्षरक्षोदैत्यादि समस्तदेवयोनिरूपं मनुष्यपश्वद्रिद्रुम समुद्ररूप, अपि च एकपाद्द्विपाद्बहुपाद्रूपभूत तद्धेतुरूपात्मक प्रधान विशेषचेतना चेतनात्मक प्रपञ्च स्वरूप स्थूलरूपं यद्यप्युपक्रान्तयोगस्य उपासनाशक्यमेव; अथापि अशुभाश्रयमिति न मुक्तिसाधनम् ।

100. पूर्वोक्त आब्रह्मस्तम्बपर्यन्तः चराचरात्मकप्रपञ्चः विष्णोश्शरीरभूतः तच्छक्ति समन्वित एव । सा च विष्णुशक्तिः परा, अपरेति, तदतिरिक्तकर्माख्येति च त्रिधा भवति । तत्र कर्माख्य शक्ति वेष्टिता अपराख्यरूपा क्षेत्रज्ञ शक्ति. जन्म जरा मरणादि संसारतापमनुभवन्ती, तत्तत्कर्मानुगुणशरीर धारिणी विज्ञान तार तम्यमाप्नोति ।

तत्प्रकारं निरूप्यमाणमवधेहि ॥

101. स्थावरेषु प्राणरहितेषु सा विष्णु-
शक्तिरल्पीयसी स्यात्ततोऽपि
कर्णजलूकिका शतपदी मृत्साद
कादि सरीसृपेषु च, ततोऽपि
विष्किरेषु, ततोऽपि जन्तुसामान्येषु
सैन्धवेषु ततोऽपि कुञ्जरेषु
रोहिणीषु ततोऽपि नैचिकीषु ततोऽपि
दृश्यतेऽधिकतरा मानवेषु
यक्षगन्धर्व नागादिके ततोऽपि
ऋतुहविर्भोजिषु ततोऽपि निर्जराधि
न।यकेऽपि च दक्षे पुनस्ततोऽपि
सा चकास्ति हिरण्यगर्भे ततोऽपि ॥

102. एवं विधप्राणिचयस्समस्तः
तद्विष्णुकायावलिरेव नूनम् ।
अचिन्त्यशक्तिस्स हि सर्वभूतै
स्सङ्कीर्णमूर्तिर्गगनं यथैव ॥

108. प्रोक्तं पुरा यत्तु पराभिधानं
तस्य द्वितीयं नरनाथरूपम् ।
तपस्विभिश्चिग्दगनान्तराले
यद्यप्यमूर्त परिचिन्त्यमानम् ॥

104. विष्णवाख्यमेतत्सदिति ब्रुवन्ति
प्राज्ञाः तदेवाश्रित सर्वशक्ति ।
तदेव पूर्वोक्त समस्तविश्व
रूपाणि धत्ते च महोज्ज्वलं च ॥

105. समस्त कल्याणगुण प्रपूर्णं
तिर्यङ्मनुष्यामर रूपचेष्टाः ।
नामानि बिभ्रद्दनुजान्निहन्तुं
तदा तदोदेति जगद्धिताय ।।

106. न कर्मभोगाय हि तस्य विष्णो
रेतादृशं प्राकृत जातिजन्म ।
लीलाविभूतिः परमस्य चेष्टा
न रावणाद्यैर्दनुजैर्निरुद्धाः ।।

107. अस्त्यस्य नानाविधरूपजातं
बद्धं च मुक्तं च, तथापि नैतत् ।
मुमुक्षुचिन्त्यं, परवासुदेवा-
ह्येवानुसन्धेय मनन्तवीर्यम् ।।

108. हिरण्यरेताः पवनेरितस्सन्
यथा द्रुमाणां गहनन्तु शुष्कम् ।
तथैव विष्णुर्हृदयान्तरस्थ-
स्तनोत्यघौघं भसितावशेषम् ।।

109. तस्मिन् परे ब्रह्मणि चित्तवृत्ते-
र्निष्ठा विशुद्धा ननु धारणा स्यात् ।
त्रिभावनातीत शुभाश्रयेऽस्मिन्
साधारणा भूप ददाति मुक्तिम् ।।

110. ब्रह्मादयोऽन्ये खलु कर्मनिघ्न
जन्मान्तभाजो न विशुद्धरूपाः ।
अतश्च हेतोर्नृप धारणाया आलम्बनत्वं न भजन्ति जातु ।।

(अत्र 111 नाभाव्यन्)

111. अत्यश्च तस्यैव परात्परस्य स्थूलं विशुद्धं रमणीयरूपम् ।
आलम्बनीयं नृप धारणाया देदीप्यमानं श्रृणु सावधानम् ।।

112. शरदिन्दुचकचकस्मयहारिवदनेन
शतपत्र जैत्रनेत्रद्वयेन
सुविशाल फाल मञ्जुल कपोलयुगेन
मकराङ्क मणिकुण्डलद्वयेन
शङ्ख जैतृत्रि रेखाङ्कितग्रीवया
सिन्धुजामन्दिरोरस्स्थलेन
आजानुलम्बि चतुर्बाहुनतनाभि
युत वलि त्रितय शातोदरेण
करिवर करोरु सुरुचिर जानुयुगल
साम्यविरहित पाद पल्लव युगेन
हैमवसनेन मकुटहाराङ्गदैर्वि
भासमान रथाङ्गेन कम्बुना च ।।

113. श्रीपतिमेवं मनसासेचनकं चिन्तयेत्सुदृढम् ।
योगी क्रमेण विष्णोरेकैकाङ्गं विभावयेत्तावत् ।।

114. नाङ्गं यावत्तत्तल्लुप्येदन्याङ्ग चिन्तनावशतः ।
आपद पल्लवमा शिख माकलयेदिन्दिरा नाथम् ।।

115. गच्छति तिष्ठति पश्यति खादति कुर्वति च यत्किमपि पुंसि ।
अभ्यासवशाद्विष्णुं न विस्मरति चेत्स मुक्तिमाप्नोति ।।

116. सुरदनुज मनुज नाम प्राकृतशारीर भेदः
अज्ञाने तु विनष्टे परमं साम्यं हरेरूपैति स्वम् ।

117. एवं नरवरबन्धच्छेदकयोगस्तु साङ्गोऽयम् ।।
विशदीकृतः किमन्यत्करणीयं ब्रूहि सज्जोऽस्मि ।

118. एवं निगदति तस्मिन् खाण्डिक्यः प्राह, "धन्योऽस्मि ।
नैवेतः किञ्चिदपि श्रोतव्यं नार्थनीयमप्यस्ति" ।।

119. इत्युक्तेन तु केशिध्वजेन दत्तं निवार्यमाणेन ।
अपि राज्ये स्वीये सुतमभिषिच्य नियुज्य चापि सचिवादीन् ।।

120. "अप्राप्तयौवनममुं गमयत मार्गं पुरातननृपाणाम् ।"
इति, सम्माननदानैः पोषय तानिति च पुत्रमात्मीयम् ।।

121. अनुशास्य च दामोदर पदारविन्दैकनिहितचित्तस्सन् ।
योगाग्निदग्धकर्मा तपोवनीभूततद्वने गमयन् ।।

122. कांश्चिद्दिवसान् केशिध्वजोपदिष्टेन मार्गेण ।
परमं पदं प्रपेदे निवृत्तिशून्यं स खाण्डिक्यः ।।

123. केशिध्वजोऽपि तत्सूनुं प्रतिष्ठाप्य समन्त्रिणम् ।
तद्राज्ये मिथिलां गत्वा भक्तियोगपदे स्थितः ।।

124. पापपुण्याभिधं कर्म दुःखस्य च सुखस्य च ।
भोगेन क्षपयन् कामं शासति स्म वसुन्धराम् ।।

125. तस्मान्नराधिप; मुमुक्षुजनैरुपास्यः
सिन्धूद्भवानिलयितोज्ज्वल पीनवक्षाः ।
नेत्रद्वयायित दिवाकर शीतरश्मिः
नारायणः परम एव रथाङ्गपाणिः ।।

126. पाण्ड्यक्षितीश्वर; भजस्व तमेव मान्यं
किञ्चापरं शृणु भवेद्यदि भक्तियोगे ।
काचित्क्षतिस्तनुमिमान्तु विहाय योगी
जन्मान्तरे परमुपैति न संशयोऽत्र ॥

127. हे भूप ! किञ्चिदवधेहि समीकरञ्जे
पार्थाय पद्मनयनोऽयमुपादिशत्सः ।
लक्ष्मीशपाद शरणागति धर्मरूपः
देहान्त एव परमं नयते पदं तत् ॥

128. निरपायोपाय इति प्राख्यत्तस्मिन्नरेन्द्रसभे ।
नारायण पारम्यं जितकाशिनि तद्द्विजे निरूपयति ॥

129. पणशुल्कभस्त्रिकागुणविततिस्त्रुटति स्म, निष्कविसरो द्राक् ।
न्यपतद्भुवि नेदुर्दिवि सुरदुन्दुभयोऽमरास्सुमान्यकिरन् ॥

130. खाण्डिक्य केशिध्वजवादरूपस्सर्गस्तृतीयोऽवसितो मनोज्ञः ।
आमुक्तमाल्याभिदनाम्नि विष्णुचित्तीय नामान्तर काव्यरत्न ॥

इति श्री कुण्टिमद्दि श्रीनिवासाचार्यस्य पण्डित प्रकाण्डस्य पौत्रेण शेषशर्मणा अनूदिते विष्णुचित्तीय महाकाव्ये खाण्डिक्य केशिध्वजसंवाद रूप स्तृतीयस्सर्गः



1. इत्थं भक्ततल्लजेन विष्णुचित्तेन "तुरीयपुरुषार्थ-
विश्राणनसमर्थः वेदान्तवेद्यः श्रीमन्नारायण एव
परं ब्रह्मेति बोधितो महीवल्लभः प्रीणाति स्म कामम् ॥

2. प्रीतक्षोणिपसम्भ्रमद्भुट कर प्रभ्रस्यमानैरुप-
ग्राह्यार्थैर्मणि हेम मण्डननवीनाच्छादनानां चयैः ।
कोशागार सभाङ्गणान्तरगतो घण्टापथस्सङ्कुलै
[1]राष्ठीवद्द्वयसैर्विभाति नितरां भूचित्रमाल्योपमः ॥

3. अद्धा वाक्सुर,मञ्ज[2]सावचन कन्याहार माहावचो
गान्धर्व कृतताङ्गतः कलिरिति श्रीसूक्ति विद्याधरम् ।
इद्धोद्धत्यमगाल्लयं हि कुधियामित्थं वदत्किन्नरं
चासीदम्बरमस्य धीरमनसो जैत्रोत्सवेऽत्यद्भुते ॥

4. बुधाः केचिदनालोक्य वितर्दिस्थितपादुके ।
आलीढ सृक्वनिर्गत्यवाहक प्रेरितेक्षणाः ॥

5. पुरस्स्थितामनालोक्य पल्लकीं पण्डिताः परे ।
गत्वा पदानि कतिचिदाह्वयन्तश्च वाहकान् ॥

---

1. जानुदघ्नैः, 2. सत्यं

6. सभातोरणपर्यन्तमागत्य सहवासिनः ।
विस्मृतान्मृगयन्तश्च संख्यावन्तः परे बुधान् ।।

7. सम्मुखागतमात्मीयवृत्तान्तः परिपृच्छय तम्
निशम्यानवधानेनानुमन्तारश्च केचन ।।

8. किं वादफलमित्यन्यैः परिपृष्टा" महीपतेः ।
पक्षीयस्य तु दासेरः जीवतीत्यपि वादिनः ।।

9. "तत्तथैव", वसेत्को वाभिमानी पण्डितोत्तमः ।
तस्यां विमर्शशून्यायां सभायामि ति भाषिणः ।।

10 सर्वे ते वादविजिताः शृङ्गाटकसुसङ्गताः ।
ईक्षमाणा भूपसभं भाषमाणाः परस्परम् ।।

11. बिवर्णवदना एव ययुः स्मात्मनिकेतनम् ।
राजापि पूजयामास जेतारं तु विपश्चितम् ।।

12. चक्राङ्कनादि संस्कृत मकरोन्महिपं स विष्णुचित्तोऽपि ।
अनुजग्राह च मूलद्वय चरमख्यैश्च सार्थकैर्मन्त्रैः ।।

13. प्रणिपत्य भवमहोदधिसन्तारणकर्णधारमाचार्यम् ।
आर्चद्राजा तन्त्रकफलताम्बूलै स्सदक्षिणैरेनम् ।।

तदनन्तरञ्च

14. कृत्वा गजाधिरूढं नयतैनं धन्विनव्यपुरम् ।
इति धरणीपत्याज्ञां राजकुमारा निशम्य परिवाराः ।।

15. भूदेवं तमनुव्रजन्नुभयतस्तम्बेरमाधिष्ठितं
सैनाङ्गैस्सह सैनिकाश्च सचिवा आतोद्यनादैः पुरः ।

षड्वाद्यन्दिनिरन्तरस्तुतिरवैर्मातङ्गघण्टास्वनै-
र्वेश्यानूपुरकिङ्किणीकलरवैरभ्रे प्रतिध्वानिनि ।।

16. आसीद्धिङ्गुलिमज्जितोद्धृतमिव [1]श्यामाम्बरं पक्षति
च्छायाभिः प्रथम, नभोऽरुण, मथ क्षीराब्धि मण्डव्रजैः ।
स्निग्धामोदि,ववौ तुषारपवन. पश्चा, न्निनादो महा
नासीत्प्रादुरथाम्बरे, खगपतिस्त, स्योपरि श्रीपतिः ।।

17. पादद्वन्द्वे गरुत्मत्कर पुट निहिते पल्लवन्यूहमध्ये
रक्ताम्भोजद्वये वा, विहग कुलपतेरुर्ध्वगेकान्तिपूरे ।
नीले दीव्यत्सुकाये कनकवसनवत्पत्युरम्भोधिजायायाः
योगि स्वान्तेषु सवतेष्विव च गलचलद्धारमुक्ताफलेषु ।।

18. लक्ष्मीसोदरताभिमानकलनाक्तिञ्चिद्विवक्षाविव
श्रोत्रालङ्कृति कैतवान्मकरिका युग्मे मिथो राजति ।
वात्या धूतपरागमण्डल समीपायात हं सोज्ज्वल
त्कल्पानोकहशाखिका समभुजद्वन्द्वे च दृष्ट्वा हरिम् ।।

19. मुनितल्लजनिध्याना निमेषनयनास्समे सुरा झटिति ।
साकं करकमलयुगैर्न्यमीलयन् स्वतपत्राणि ।।

20. द्रष्टुं सत्रायातास्सुरैर्गरुत्मद्गरुन्मरुत्स्पर्शात् ।
खल शूर्प निहत बुसवद्व्धाविरे राक्षसाः पिशाचाश्च ।।

21. नीरन्ध्रकुसुमधारा सार चरच्चञ्चरीक झङ्कारान् ।
तिरयद्ववृधे साम्नां गानं स्तुति मुखरपारिकाङ्क्षिकृतम् ।।

1. नीलवस्त्र विस्थितं नभः=गगनम् ।

22. वीक्ष्य पद्माक्षमेवं प्रत्यक्षभूतमन्तरिक्षगतम् ।
सम्मद पुलकित गात्रो मुनिर्ननादे भघण्टिकातालैः ॥

## विष्णुचित्तकृत विष्णुवर्णनम्

23. जय जय दानवदारण कारण शार्ङ्गरथाङ्गगदासिधर
जय जय चन्द्रदिनेन्द्रशतायुत सान्द्र शरीर महःप्रसर ।
जय जय तामरसोदरसोदरचारु पदोज्झितगाङ्गझर
जय जय केशव केशिनिषूदन मारमणीधव पापहर ॥

24. धृत्वा वैसारगत्रं पृथुतरमवधीर्वेदचोरं मुरारे
त्वग्बिन्दु न्याजतस्त्वं वपुषि समधरो वेदवर्णी, ननैषीः ।
भूयस्तद्ब्रह्मजालं कमल भुवमिवाम्भोनिधेर्मेधषुष्णा
ण्याक्रामन्ति स्म धातुर्भुवनमयि भवद्धाम यानत्वरायाम् ॥

25. अभिगन्तुः प्रलयान्तवारि भवतस्तालुद्वयान्तर्दरी
निपतद्वा श्वर सच्छदावनि धरो द्धातेन शब्दायितः ।
विपुलाजाण्डगुडः पुरातनवचः कान्ता परास्कन्दिनः
ननु जेतु स्समभू त्समीक विजयस्योद्घोषणा दुन्दुभिः ॥

26. निरवधि जृम्भणोज्ज्वलतिमिङ्गिल काय मुपेयिवद्भव
द्वदन गुहान्तरे कुपललाशन गण्डकपात एष किम् ।
तव गिलनं ? न, किन्तु निगमायित रेचितवायु पुरणे
भवदतुलैधनैधित जवाहृतिरेव, रिपोरणुत्वतः ॥

27. जलपूर प्लवमानमृण्मयमही संरक्षणालेप नि
र्मितिकृत्ये दर शुक्ति मौक्तिक चयं चूर्णं विधातुं हरे ।

बलभिद्वज्र सदृङ् निजोपरि परिभ्राम्यन्महा मन्दराऽ
चल संघृष्टि घरट्टभूत कमठाधीशं भवन्तं भजे ।।

28. भूदारत्वमुपेयुषि त्वयि सकृत्फूत्कारमातन्वति
ब्रह्माण्डस्य विदार्य कर्पर मदो निष्ठ्यूतमन्यस्स्थितम्
संवर्तोदकमब्जजाण्डमपि तद्युक्त महानासिका
रत्नं तत्प्रकृतिस्त्रियो विरचितं वा दीव्यतः प्रोज्ज्वले ।।

29. दैत्येन्द्राशयकुण्डिका स्त्रविक चच्छायां स्वकीयां विलो
क्यैषोऽन्यो मृगराज इत्यसहनात्कर्षन्निवाद स्सटा ।
क्रोधादान्त्रचयं तदीयकुहरात्कृष्टुं खरैर्व्यापृतैः
मायासिंह ! भवांच्छिनत्तु नखरै रं हो लता मामकाः ।।

30 लोकव्याप्त भयान्धकारक सुरद्वि ड्विक्रमात्यद्भुतो
ष्णांशुग्राहक सिंहिकासुत इवा भूरिंशशुमारं व्रजन् ।
त्वत्काये ननु जृम्भिते न समभूदेकस्य लोपोबले
श्शौर्यार्कस्य परन्तु सर्व जनता भीत्यन्धकारस्य च ।।

31. शमित क्षत्र कलत्रनेत्र जलकुद्वासु युष्मद्यशः—
कलहंस्य भवत्सगेन जनितात्क्रौञ्चस्य रन्ध्रान्तरात् ।
गतिमालोक्य, परित्यजन्ति गमनं नाद्यापि वर्षागमे
कलहंसा हि, ततो गतानुगतिकस्तिर्यक्चयो भार्गव ।।

32. मन्तुर्वज्रहति तृणाय तु दशग्रीवस्य, सीतापते !
धातूनामपि सप्तकस्य दलनं कर्तुं कृताभ्यासवत्
युष्मद्वायुजवाशुगो लघुतरं सप्तापि सालद्रुमां
श्छित्वा यो निगात्सलील मवतादस्मान् दिशन् सम्पदः ।।

1. शरेण

33 स्यन्दन स्थित बिडौज. क्षत्तृ जाड्यकृ
ज्झञ्झामरुद्गरुज्झाङ्कृतानि
कन्याशिराङ्गात्र कनदसृग्गाहन
स्फुटशल्य हव्य भूक्छूत्कृतानि
योधवर्मितहृत्पुटोत्क्रान्त निजपात
सालाश्मकृतमुहुः ष्ठाङ्कृतानि
पतितोग्ररक्षः कबन्ध भार भृशार्ति
भुग्नभोगफणीन्द्रफूत्कृतानि
रथ्य विश्रान्ति कृद्गरुच्छायदानि
दिव्य तावक कार्मुकोत्प्रेरितानि
घ्नन्तु मद्दुरितानि लङ्कापुराङ्ग
णाम्बर चरत्कलम्ब कदम्बकानि ॥

34. "उद्भूता धरणेः पुनश्च धरणौ लीने"ति सीतां पुनः
लब्धुं तद्विरहावदात वपुषा नीलान्तरीयेण च ।
जातस्त्वं न नु शातफाल[2] विलसत्सीरेण रामप्रभो !
कालिन्दी तट भूमि मुत्खन सिनोचेत्तन्मुधा कर्षणम् ॥

35. त्वत्काये प्रतिबिम्बिते तु करशाखाग्राद्रिवान्ताच्छ
वार्धारायुक्त विधूपलेषु परितश्शैलं गवा संहृतिः ।
श्री नारायणमूर्तिमत्कवच सन्नद्धेव लेभेऽवनं
हे नन्दात्मज ! सप्तरात्रमविदद्धाराधराडम्बरम् ॥

1. छायाबाहुण्ये. 2. हलस्य अयश्शलाका.

36· अस्त्री भूय भवान्निहन्तु मसुरान्यत्नं चिकीर्षन्नपि
त्वत्पुत्रं तरुणं सपञ्चविशिखं दैत्याबला निग्रहम् ।
छेत्तुं प्रैष्यदिदं कुतो ? भवदभिप्रायो हि बुद्धो नु; त
त्कान्ताशील तनुत्र मन्यशरभृत्छेद्यं न हि स्यादिति ।।

37 घोरापारमहाघ पञ्चकसमुच्छेदं विधातुं नु किं
धारापञ्चकधावने कृतसदभ्यासं व्यधा वाजिनम् ।
तादृक्त्वां प्रणमामि कीकट शराली वारवाणी भव
द्दोरुद्भ्रान्त कृपाणिका युग तटिद्ग्रन्थि महासादिनम् ।।

38· इत्थं स्तुवन्तं निजदासतल्लजं-
श्रीभट्टनाथं स समीक्ष्य माधवः ।
दयारसविलन्नविलोचनाञ्चलो
जगाद तक्षा।णमर दिवौकसाम् ।।

39. पाण्ड्येन दत्तानि धनानि नून
सर्वाण्ययं वैष्णवसात्करोति ।
मत्प्रीतये, तन्मणि गेह मस्मै
निर्माय सर्वार्थ युत विधेहि ।।

40. आदिष्ट इत्थं स तु विश्वकर्मा
विनिर्ममे वेश्म यथानिदेशम्
अन्तर्दधे तार्क्ष्यरथः स विप्रो
जनादृतो धन्विपुरं जगाम ।।

---

1· वर्धकिः.

41. पुरीमलङ्कृत्य रसालतोरणै
स्सपूर्णकुम्भं सहनर्तकीजनैः ।
दिदृक्षवः पौरजना वधूयुता
स्तमभ्यगच्छन् सह तूर्यनिस्स्वनैः ॥

42. इत्थमभिगम्य पट्टपवित्र भगवत्तीर्थं प्रसादानुपायनीकृत्य पुनः पुनः प्रणम्य उत्थाय प्राञ्जलयः भर्मपरिकर्म विनिर्मिते ब्रह्मरथे तं भागवतशेखरमुपनिवेश्य, पौर जान पदा मिथस्सङ्गता गच्छन्ति स्म । शब्दायन्ते स्म भेरीढक्का डमरुमड्डुडिण्डिम झर्झर मर्दल पटह वाद्यानद्धानि, वीणा वल्लकी परिवादिनीप्रभृतीनि, ततानि तालादीनि घनानि, वेणुकाहलादीनि सुषिराणि च । तत्र तत्र परावृत्य नृत्यन्तीषु नर्तकीषु, पत्तनागतगज घटाघोट्टाण घोटक घण्टा कदम्बघर्घर घोषाणां प्रतिरवायमानेषु विलासिनी मञ्जु मञ्जीर शिञ्जितेषु ।

पार्श्वानुसर त्कवचित कुथा कर्बुर करिवर करेणुकन्धरा-रुढ करगृहीत कनकाङ्कुशान् सामन्त भूकान्त कुमार समूहाना-लोक्य उन्नमिताञ्जलिबधं नमस्यन्तीः, अहमहमिकया गच्छन्तीः उत्तान तरल तारक विलोचनं पुनः पुनरावृत्य पश्यन्तीस्स्तु-वन्तीर्दृष्ट्वा ।

तत्रत्यसुन्दरीणां स्वेषां च तत्पूरागमन समयेषु संयोजका इति परिहास पात्राणीति तत्प्रहरण व्याजेन ग्राम ग्राम ग्रामणीभि-रूपायनी कृतै स्सारङ्ग मातुलुङ्ग जम्बीर कुन्दकन्दुकैः पूर्वोप-भुक्ता नक्तञ्चरमुखीः प्रहरत्सु तेषु राजकुमारेषु ।

दलदलत्तरलताटङ्कं अङ्कुरितस्मितं तन्मुखप्रेङ्खोलित स्फीतसाकूत विभ्रमाके करापाङ्ग विलोकनं, आचलि तधम्मिल्लं, परिवृत्तवदनं गत्वा, जनमध्यगत मार्दङ्गिक स्कन्धान्तरितासु ।

---

1. चन्द्र ।

मार्दङ्गि केषून्मत्तेष्विव मृदङ्गावमर्दनाय प्रतिपद मवन तेषु परिदृश्य मामासु तद्राजन्याभिमुखीभूय धम्मिल्ल समीकरण समयपाति तन्नारङ्ग निवारक करतलच्छन्न वदनासु, संभ्रमसमय चलत्कर्णावतंस खुरलीभूत कपोल परिदृश्यमान वैलक्ष्य हासकुन्द चन्द्रिका सान्द्र वदनबिम्बासु ।

चाटूक्ति वाचाट जठरासु नमस्कुर्वन्तीषु प्रतिवन्दनमकृत्वा मुखानि साचीकृत्य उभयपार्श्व योः पूर्व सङ्गति स्मरणेन अवनत मुखं चरन्तीना कौटिल्य विज्ञाय परिहासाय, वन्दनलिप्सया च तत्र नरनाथ सन्निधाना भावेन, अन्य सामान्य जनानविगणय्य मर्मोद्घाटनाय, "विद्यावयोवृद्धासु भवन्तीषु नमस्कुर्वन्तीषु, कथं ता न नमस्यन्ती"ति, प्रणामयन्त्विनि वदत्सु राजकुमारेषु ।

हठादीषदङ्कुरित हास फुल्ल द्वदनार विन्दै रनमस्यन्त्य एव, सहचरीणां भग्नाधर चूत्क्रियाभि सूचयन्ती रात्मीय तद्राजक सङ्गतिम् ।

तत्सूचना वेदिनीभि. "अत्तिके ! अस्मद्भाग्य देवता अमी; नपतैता निति, सान्त्वनाभिश्च भ्रूभङ्गै र्भापयित्वा च पुरो निरस्ताः कथञ्चिद्दूरीकृत नमस्क्रियाकाः त्रपातरलित-नयना: विरल विरलाङ्गुलिबन्धं कृताञ्जलीः ।

तत्सरस गोष्ठी दीर्घयितु, निस्त्रावलिप्त तन्तु वेष्टनानीव आवृत्य हसन्ती स्ता वृद्धचपल कामुकीः कूटकोपेन सताड्य, अरुणापाङ्गान् राजकुमारेषु प्रसारयन्तीराननना मेदेन आश्रय माणानां मधुकराणां झङ्कारमदं परिहरत्सु तत्कान्ता चलित कङ्कणक्रेङ्कारेषु ।

कर्णशङ्खनकै र्भुग्नांसकैः वक्रशिखाभिः काषायपरिच्छदै रुपेतैः दुःखायितगृहवासितया वार्धक्ये तत्पुरमागतै रसिकजन सम्बन्धेन विस्मृतबन्धुजनवियोगव्यथै गन्धकलना कुसुम स्रग्ग्रथ-नादिषु प्रमादरहितै. आन्ध्रदेशीयगन्धकारै. चूर्णिकापठनपूर्वक स्तुवद्भि, घोटकारूढ राजकुमारान् भवनावतंसं कान्ताजन च, कीर्णेषु उत्क्षिप्य सकलसृष्टिन्याप्तेषु अस्पष्टपरिमलभेदेषु पिष्टा-तकेषु, नभोमण्डलचण्डातकायमानेषु पिहितचण्डकरकिरणेषु

वियत्तलमभिव्याप्य अध.पतिताभि पीडितभस्त्री नीहार-वारिधाराभि तिमितानि आनद्धवाद्यानि तेजयितु वादिषु वह्निमार्गणपरेषु,

नृत्तदिदृक्षागतजनसङ्घे चरति मन्दमन्दं कामुक जनैस्सह तासु पुण्डरीकनयनासु लब्धावकाशासु, काशकुसुम प्रतिफलन-पाण्डुरासु पद्यातिहृद्यपार्श्वद्वयोद्यान पादपसेचनाय प्रवहन्तीषु कुल्यासु अवतीर्य, कासरी दधिमिश्रित शोषितनारङ्गशृङ्गि-बेरभङ्गै क्रमुकपुटेषु सञ्चित पर्युषितकलमान्न अत्तुमुपविष्टासु

तास्समीक्ष्य कुक्षिम्भरित्वेन क्षुत्क्षामेषु दासेरसङ्घेषु "गोपालभिक्षां याचित्वा भक्षणाय उपक्रान्तेषु, तैः तीरक्षोणि-निहितमहादीपस्तम्भानां रन्ध्रगोलेभ्य उद्गताभि उत्कील धगद्धगायमान जगज्ज्योतिर्दीपज्वालाभि धूपकुण्डिकाङ्गारैश्च सम्यक् शुष्कीकृत्य शब्दपरीक्षायै ताडयमानवाद्यधिन्धिमिध्वान भीतसम्भ्रान्त उभयपार्श्वगत शुकसन्ततिषु इतस्ततो गच्छन्तीषु अनाबद्धतोरणमालिकास्विव दृश्यमानासु तद्द्रुतेन अनाकर्णितगान-स्वनानां भागवतजातानां मुखव्यादान पाणिपादाद्याङ्गिकचेष्टासु केवलं दृश्यमानासु ।

प्रतिग्रामप्रवृत्तसप्नमाह्निक सन्धासु वस्तुक्रयार्थगमनाय शालासु बद्धाना आडबाजातानां पोतेषु पादबन्धैर्गत्वा उपशल्येषु मृदुलदूर्वाङ्कुरग्रसनेन, अनुसाय चर्व्यमाण कण्डोलनिहितधाना-भक्षणेन कारीष भूत्या अङ्गोद्वर्तनेन च मासलस्निग्धतनुषु जीर्णराङ्कवखण्डस्य छायाया वा दर्शनमात्रेण सन्त्रासशीलेष,

आप्रपदीन लम्वमानकुञ्चकैः प्रतिवितस्ति प्रतिहस्त स्यूतैर्नानावर्ण जालकैरलङ्कृतै रास्तरणै स्सज्जेषु,

चन्द्रचन्द्रिका धवल सुगन्ध परिमिलित वासोमात्राभरणै अधिरूढै स्तत्पुर नानाविध तन्तुवायवश कुमारकै वल्गानियमन-मगणय्य, अलक्षीकृत्य च उत्सवनिरीक्षणागत जनसन्दोहं चतुर्भिरपि पादै रास्कन्दनपूर्वकं धावमानेषु,

तन्मध्यगत वृद्धवध्वातुर निन्दावाक्याना प्रतिवचनमपि वक्तुमक्षमान् मुष्टिगृहीतप्राणान् सादिकुमारान् ऊढ्वा समीप नूत्नकृष्ट केदारेषु, मग्नसफेषु ततो गन्तुमक्षमेषु च तेषु किशोरेषु ।

स्थातुमुत्तर्तुं वा अक्षमान् सादीनालोक्य सवलयकरतालं वारकान्ताकृत परिहास कोलाहलैर्निबिड निष्कुट विटपिवाटीषु प्रतिध्वनितासु,

तादृशानूनविभवेन तत्पुरीं प्रविश्य स भक्ताग्रेसरो विष्णु-चित्तः चक्रधर प्रासाद प्राङ्गणे अवतीर्य धरणीधव स्थानिक समूह समेतः तं वैकुण्ठवासिनं ससेव्य गृहीत प्रसादः तत्परिवेष्ट-नेनालङ्कृतः,

नानालङ्कार सहितं रत्नकाञ्चनमयं स्वकीयं भवन विलोक्य अभ्दुतरसाक्रान्तमानसः, तत्सर्वं तस्य पुण्डरीकाक्षस्य महिमालब्ध वैभवमिति मन्यमानः,

अनुमान्य तत्रत्य धरणीकलत्रान् स्वगृहगमनाय पूर्वतोऽपि शतगुणाधिकं भगवद्भागवत पूजाप्रवणः कालं नयति स्म ॥

43. दत्तोपायनगेहि मन्दिर कृत स्नानापाहीं शुचि
जग्धि प्राश्य च षड्सामधिकृता रात्र्यां हरेरालये ।
सेवाकाल विनोदनर्तन पर भ्रूकुंसु सुभ्रूमिथ
स्स्पर्धा चाप्यपनुद्य भूषण पट ग्रामान् रमाजानये ॥

44 निवेद्य, कल्ये मधुरानगर्यै
ययुस्ततोऽभूत्स तु विष्णुचित्त ।
माजानि माल्यग्रथने रतश्च
यथापुरं, भागवतार्चने च ॥

## श्री यद्यामुन चरितम्

45. अथैकदा सूनमनोज्ञमालिका
समर्प्य यान्तं निजमाल्यकारिणम् ।
प्रदर्श्य फुल्लाम्बुजलोचनो रमां
जगाद मन्दस्मित सुन्दरानन ॥

46 एषोऽयमेको ननु सिन्धुकन्ये
मदीयमेतन्मतमुद्धार
समुद्धरिष्यत्यपरोऽपि कश्चि
न्मतान्तराभील विधुन्तुदास्स्यात् ॥

47. इत्थं ब्रुवाणं तमुवाच कान्ता
हे नाथ ! युष्मत्करुणारसार्द्रः ।

खो ंडोऽप्ययत्नं पर्वत लङ्घनेऽपि
मूकोऽपि वाचालति सर्वशक्ते ।।

48 श्रोतु तथापीच्छति मानस मे
भविष्यदर्थं यदि मन्यसे त्वम् ।
वक्तु तु युक्त, न हि चेद्रहस्यं
प्रसीद लीलायित लोकवृत्त ।।

49 इत्थं वदन्ती पुनरब्रवीत्तां
मनोरमा कोमलपाणि पद्माम् ।
रमां गृहीत्वाथ रथाङ्गपाणि
पाणौ तदीयाननदत्तदृष्टि ।।

50 न सांप्रत यद्यपि भावि वक्तु
रहस्य मे वैतदथापि कान्ते !
निगूहितु नैव हि शक्यते त्वत्
निकेतनीभूत मदीयचित्ते ।।

51. किञ्चेदमन्यच्छृणु मूषितास्म·
त्स्वान्ते ! जगन्निर्मितिपालनादि ।
तवैव सन्तोषयितुं हि चित्त
करोमि तस्माच्छृणु तद्ब्रवीमि ।।

52. एतत्पाण्ड्यमहीजानेर्वंशे कश्चिद्भविष्यति ।
सोऽपि शैवमतोन्मत्तो न मे नामापि वक्ष्यति ।।

1. पङ्गु :

53. न श्रोष्यति मनाक् श्रुत्या प्रासादं मे न यास्यति ।
न नमस्यति मद्बिम्ब मुत्सवान्मम भेष्ययति ।।

54 परतत्त्वं शिवादन्यन्नास्तीति मतिमास्थित. ।
नथैव तत्सखायोऽपि शैवाचारपरायणा: ।।

55 कुलदैवते बभुक्षार्ते तु दास्यति
भौमवारे वीरभद्रपात्र
अर्चयिष्यति स राजा जङ्गमान् वेद–
विद्व्रज सपूजन विहाय
तोपयिष्यति संपरित्यक्तपैतृक–
श्शङ्करदास कदम्बकानि
जङ्गममठचय निर्मास्यते प्रत्न–
देवतायतनेषु प्रशिथिलेषु

खेच्छयते ब्रह्मसूत्राण्युपनिषदोऽपि
श्रोष्यति च लिङ्गधारिभ्य उत्सवेन
वन्दनीयास्त एवेति हन्त ! लिङ्ग
धारिणि वदति परितुष्यति च निशम्य ।।

56 शिवलिङ्गधारिकृत्य न वारयिष्यत्यकृत्यमपि तद्य ।
अनुमनिता तस्मै भूसुराय दास्यति गृहाग्रहारादीन् ।।

57. शासति तस्मिन् राज्य सकलास्स्वायत्त ताम्रपर्णीजा: ।
व्ययिता अमूल्यमुक्ता माहेश्वरकण्ठभूषार्थम् ।।

58. जन्म भूत्यागमसहमाना मृदूक्ति
भासुरास्सञ्चरिष्यन्ति भूसुरा हि ।

भस्मपुण्ड्राश्च धृत सूत संहिताश्च
बाहुसन्नद्ध रुद्राक्षमालिकाश्च ।।

59. आविष्करिष्यति नृपो न कलङ्कजगिध
शैवस्य, पानमपि नो वरुणात्मजायाः ।
उद्घोषयिष्यति महीसुररिङ्खणन्तु
प्रोत्साहयिष्यति दृशा परिभाषणाय ।।

60. तन्नृपदारा नियत मदाराधन तत्परास्तथापि धव ।
नास्मत्पदसेवक इति पारं ज्ञास्यन्ति नैव चिन्तायाः ।।

61. एवमपि सा पुरन्ध्री तनिष्यते गोमुख गृहालिन्दे ।
बृन्दावनस्य तदलङ्करिष्यते रङ्गवल्लीभिः ।।

62. भुक्तवैकवारमेषा दशमी दिवसे परेद्यवि निकामम् ।
उपवासमाचरिष्यति निमीलयिष्यति न लोचने रात्रौ ।।

63. निद्रास्यति नैव हि सा तत्परदिवसे, कथञ्चिदपि यामान् ।
नेष्यति चतुरो ब्राह्मण ललनाजनगीत मत्कथागानैः ।।

64 दिवसत्रयेऽपि नाथ कमिष्यते नैव तत्पररजन्याम् ।
अभ्येष्यति सुमशयने शयितं दयितं दरस्मितमुखी स्वम् ।।

65. गच्छन्ती कस्तूरी तिलकस्थाने निवेश्य घनसारम् ।
मद्भक्ता पतिमेष्यति पतिव्रतात्वं मदिष्टमिति ।।

66. वाणीश गिरीशाद्या मत्तनवस्तत्तदीयपूजापि ।
मत्पूजा तत्काङ्क्षितदातास्ह मथापि भवति तरतमता ।।

1. स्खलनं.

67. देवान् भिन्नानिति तद्ब्रह्मात्मकमत्तदन्तरस्थत्वम् ।
अज्ञात्वा देहकृता सान्तफलार्चा जडान्न तारयति ।।

68. रहस्यमेतदजानन् स भूपतिस्तामस प्रकृतिः मद्भक्तजनान् साधारणमनुजदर्श पश्यन् तत् वृत्त्युपद्रव मुपेक्ष्यमाण. तद्रक्षा विमुखो भविष्यति ।

सर्वजगद्रक्षकोऽप्यहं राजद्वारेणैव हि प्रजाहितकार्य निर्वहणे रत न साक्षात्कृत्य ।

सा च रक्षा मदाभिमुख्येन विना न जायते तच्च न विना संवादेन इति विचार्य तस्य मत्प्रवणता सञ्जनयितुमुपायमन्विष्य नाथमुनिवंश पारावारसुधांशुं, बाल्ये अभ्यस्यमान समस्तशास्त्र गुरुनिकटे, यामुनाख्यमाणवकं समीचीनसाधन मन्वान., तस्य तत्पाण्ड्यावनीनाथसभे वादिविजिगीषा मुत्पादयिष्यामि । स तु गत्वा–

नानादेशागत वृद्धभूसुर कुटुम्बेभ्य धान्याजिनपटान्, वटुभ्योविवाहाय, अनुपनीतेभ्य उपनयनाय, स्वापतेयानि, पङ्ग्वन्ध बधिरादिभ्य,स्सौरभेयादि यानानि च, किच, 'तटाकादि कार्यमपरि समाप्तमिति, आयरहित देवतायतन नित्य पूजार्थमिति, तीर्थयात्राध्वनीन प्रपार्थमिति, पैतृकनिर्वहणार्थमिति, व्रतोद्यापनायेति, आमयापनोदनायेति, दूनमुखेन निवेद्यमानेभ्य. गुप्तागुप्तप्रकारेण तन्महीजानि महिषी प्रत्यर्पितानर्थ सञ्चयान् आदायादाय ददतः वृद्धवर्षवरान् समूह्य, प्रसारित दण्ड तोरणानीव एकदण्डि त्रिदण्डि ब्रह्मचारिवार समुन्नमित दण्डलम्बमान कषाय कद्रू वस्त्र कौपीन परम्परामावृत्य, रक्षकध्वजपट सरणि

मनुसृत्य, दैन्यमात्र वेदिनां अविदितान्यविद्याना एतादृशाना मन्येषा च प्राणिनामाधारभूत पश्चिम प्राकार तोरणं प्रविश्य—

प्रतिदिन श्रुतपूर्वासमत्पाद भजनकथायै तस्यै महीधव-महिष्यै दौवारिकमुखेन आशीर्वाद पूर्वक एव विज्ञापयिष्यति-"अहमस्मि वैदेशिको ब्राह्मण । स्याद्यदि प्रत्यर्थी विष्णुरेव परतत्त्व" मिति वादसङ्गरे सिद्धान्तयिष्यामि । भूपोऽय विष्णु भक्ति विमुख अतो न सहते वैष्णवस्य विज्ञापनाम् [1] (वेदयितुम्),

अस्ति भवती विष्णुभक्ति परायणा, पतिहिताचरणा च । अतस्त्वामर्थये । राजायं तवानुकूलनायक । मदीय वृत्तान्तमावेद्य मामाहूय वाद प्रवर्तयितुमीष्टे यदि वादनियुद्धे प्रतिवादिन विजित्य भर्तुस्ते जनयिष्यामि विष्णुभक्तिं कृतार्थयिष्यामि चेति ।।

69. श्रुत्वैतग्द्रीष्मातपविक्लव केकीव जलदनिनद सा ।
सन्तुष्यन्ती नेष्यति रहसि विभो श्रवण मार्ग मिदम् ।।

70. स तु सम्भ्रमेण "किं किं वादे जेतुं समागतश्शैवम् ।
पश्यामस्तद्वयमप्याकारय" तमिति वक्ष्यति महीप ।।

71. ततस्तत्परेऽहनि परिमितजनास्थान्यासीन पाण्ड्यवल्लभ समीपासनासीनया तयेन्दुवदनया राजानुमत्या प्रतीहारि मुखे नाकारितस्य वसुमती सुरकुमार. :—

72 द्वारं प्रविश्य कीलितगारुडमणि धरणि वज्रवेदीरूढम् ।
सकिसल पिप्पलमीक्ष्य प्रदक्षिणीकृत्य मध्यवर्ती भवितुम् ।।

[1]. इति कोपि नेच्छे निवेदयिजम्

73. सोपानैस्त्रिभिरून्नते च विपुले कुड्यस्थचित्रोज्ज्वले
तप्ताष्टापदपीत कान्ति कलिते भूभृत्सभे निर्मले ।
आसीनेषु महाकुथे च जटिषु व्याघ्रत्वगाच्छादनै
राच्छन्नेषु धराधिनाथमभितो माहेश्वरेष्वग्रतः ।।

74. रुद्राक्षा युत युक्त मौक्तिक लसद्धार चलच्चामरो
द्धातच्युत गोधि भूनिरजसा रक्तेक्षणाम्भोरुहम् ।
नन्दीशाङ्कित मुद्रिकोज्ज्वल करन्यस्तैकगण्डस्थल
पीठीवृत्तमृदूपधान तल विश्रान्त प्रकोष्ठ नृपम् ।।

75 हाटकसम्पुटगत रुद्राक्षक ताटङ्कमागमान्निभृतम् ।
शृण्वन्तमपि च दयिता चामर मवीज्यमान मवनीपम् ।।

76 उपसंस्थितया वीटी करण्डपाण्या कृपाणधारिण्या ।
संसेव्यमान भूमीनाथं द्रक्ष्यति महेन्द्रनीकाशम् ।।

77. दृष्ट्वा विनमित विग्रह मुपायनीकृत्य यज्ञसूत्रयुगम् ।
आसन निषण्णमेनं भूमीपो नादरिष्यते किञ्चित् ।।

78. सोपालम्भं वक्ष्यत्येतावानर्भकोऽसि किमलं त्वम् ।
पण्डितमण्डल दुर्ग्रह परतत्त्व निरूपणाया माणवक ! ।।

79. विजित विवादसमरे विलपन्त चापि नैव मोक्ष्यामः ।
ग्रीवा निबद्ध शङ्करलिङ्गमकृत्वा, विचार्य वद सम्यक् ।।

80. आयान्ति वाचयित्वा वादिन इत्यपजयेऽपि यच्छेयुः ।
तृणमथवा कणिकामित्यनपत्रप बाडबै. कि तैः ।।

81. इत्युक्त्वा माणवक दयिता वक्ष्यति दरस्मितो राजा ।
विस्फुरितारुण लोचन मरीचि सन्दीप्त भामिनी बदनः ।।

82. रुद्राक्षाणि विभूति त्यक्त्वा चक्राङ्कितो भविष्यामि ।
अस्मन्मतवादी यदि पराजयेत ध्रुवं विलोलाक्षिः ।।

83. तव वादी यदि विजितस्तस्य च तव चापि तादृगेव भवेत् ।
शैवाचार परिग्रह नियमस्तव सम्मतं भवेत्किमिदम् ? ।।

84 तच्छ्रुत्वा सम्मतमिद मस्माक पञ्चभूतानि ।
साक्षीण्यत्र तु भवता देवेदं नातिचरितव्यम् ।।

85 इति वदतोर्दम्पत्योर्निशम्य सङ्करवचासि माणवक ।
मर्मरितहरिणकृत्तिस्सञ्चलिताषाढ कौपीन ।।

86 साञ्जलिवन्धो विनयानतोर्ध्वं तनुर्विलोकयन्नुपतिम् ।
विज्ञापनं करिष्यति सामि विमुक्तासनो राज्ञे ।।

87. मैव वादी राजन्, मापि च मस्थास्समागतो नूनम् ।
कुक्षिम्भरिता दैन्यादयमिति; भक्ष्यैक जीविको वर्णी ।।

88. अपरिग्रहस्य तादृशजनस्य मम कश्चिदस्ति किमुपोष्यः ? ।
किन्नश्छिन्न यदि वसु न स्याद्दैन्यार्जितं महीजाने ! ।।

89. सर्वहृदयान्तरस्थो यो मा प्रेरयति सर्वेश ।
यश्चानिनाय मामिह तस्य हि सर्वे वशवदा नूनम् ।।

90. अपलपति यदि स एवतु निमित्तमात्रस्य ननु किमस्ति मम ? ।।
विजयः पराजयो वा भवतु ज्ञातं ब्रवीमि यत्किञ्चित् ।।

91. तावान्मदीयधर्मः ततः प्रमाणं स एव जगदीशः ।
जेष्यामि यदि तु वादे तत्साधु न चे द्विमुच्यतां शङ्का ।।

92. राज्ञीनीतो बुध इति विप्रोऽयं चेति वर्णीत ।
निर्दयमयि भूप त्वत्सङ्करवचनानुसारतः क्रियताम् ।।

93. अविदितशङ्कातङ्कं निवेद्य राज्ञे सुखं समासीन ।
अनुमत्या तस्य ततो वादायोपक्रमिष्यति स विप्र ।।

94 निगमान् स्मृतीतिहासान् प्रमाणयन् विष्णुचित्त इव ।
प्रतिवादिनो विजेष्यति नून संस्थापयिष्यति मत मे ।।

95 वादेऽवसिते पुरत पिप्पलवृक्षादुदेष्यति निनाद ।
ऋतमेतन्नारायण एव परस्तं भजस्व भूपेति ।।

96. अवनतमुखास्सभास्था श्रुत्वा यास्यन्ति पाषण्डा ।
तद्वचनानि समुन्मूलित विद्वत्तामदा अरो[1]काश्च ।।

97. तोक्ष्यति यामुनविद्यामहिमामुग्धो महीजानि ।
हर्षाद्भुत रसपूरोत्तरङ्गिताननाः प्रणस्यन्ति वटु तम् ।।

98. पन्नगपतिमृदुतल्पक पन्नलिन द्वन्द्व भक्ति परिपूर्णः ।
भागवतपुङ्गवस्सन् कृतार्थयिष्यति निजां जनि पाण्ड्यः ।।

99. दास्यति निजस्वसार पाण्ड्यानां भागिनेय एव किल ।
पट्टाभिषेक भाजनमिति राज्यार्ध सधारमपि तस्मै ।।

100. युवराजीकृतमेन स्वाधीत षडङ्ग सहित निगमौघम् ।
अभ्यस्ताथर्वाणं दिव्यास्त्रविशेषमन्त्रकृतहस्तम् ।।

101. ज्ञात्वा प्रबोधयिष्यति दुर्दान्त विरोधियूथ दमनाय ।
तेनाभिषेणनोन्मुखमेतं तन्नृपपुरोधसस्सचिवाः ।।

102. घनगर्जा मुखर दिनान्नीत्वा प्रावृषमथाभिषेणयितुम् ।
ज्यौत्स्नीयुतशरदि भवान साधयतादिति वदिष्यन्ति ।।

1. निष्प्रभा

103. मानाथमाह "साम्प्रतमेनद्वर्षासु नैव सुभगा हि ।
यात्रा, तथापि वर्षा रमणीया एव शरद इव ।।

104 निन्दां कर्कश इत्यपोहितुमना मित्रो जला धीशव–
त्सङ्गृह्याम्बु जलेचरञ्च मकर पत्रं जलाधीशितु ।
दृष्ट्वेर्ष्याग्रह सगृहीन इन वास्सञ्चारिण कर्कट
सोऽध्यारूढ इवोष्णरश्मिग्यते वाराशि कर्कटिकम् ।।

105 वनवर्षाभूत्राता शन रिपुवाह्यरि वारण प्रमुखा ।
यन्ति मुद कर्किगतेऽर्के शिवतातिस्तृतीयगस्स किल ।।

106. वनधिगमनज गर्भार्क जनित किरण
पालिरायाति सूत्यैनुजननमज्ञ ।
श्वशुरगृहमेत्य कन्यका किल पुनरपि
जननभवनाय यान्ति वेजननमासि ।।

107. कादम्बिन्युल्बजले क्षरति नदन्त्युच्चकै शिखिनः ।
द्विजता जनितारण्यक रवैरिव प्रसवसिद्धये जोषम् ।।

108. पर्जन्योऽभ्रकटाहमुष्ण किरणा रमन्ते विनिक्षिप्य तत्
रन्ध्राम्भश्च्युति वारणाय किमयस्कान्तञ्च विन्यस्तवान् ।
तत्पात्रेऽशनि कैतवाद्दनमषीव्याजेन कालायस
क्षोदो याति दिव समीर निहृत स्तस्मात्पयोदागमे ।।

109. भुव समागत्य परि भ्रमन्ती
रजः किरञ्चक्र समीर हस्तैः ।

1. वकारादीनाम् नमन क्षत्रं रोहिणी वृषभराशि, तत्तृतीय कर्कट स्थसूर्य क्षेमकरः "षट्त्रिदशस्थो भाचु" इति

1. सुखेन 2. अधिक्षयणी

समुद्रवारीणि किरन्ति चाभ्र
1विक्का वियत्कुञ्जर शिक्षयेव ॥

110. पीत पयोम्बुद डिम्भा गलितादिम करक रदन मुकुलाश्च ।
क्रमशो वलाकिकाद्वि जयुक्नाश्च भवन्ति वहुलनादाश्च ॥

111. स्वन्तोय रविघृष्टि मुष्ण ममराधीशाय वारधारजो
मूर्त्या नून मवेदयद्बमुमती शक्रेण सयोजिते ।
शिक्षायै धनुषीव राजति नभस्यर्कांशवस्साध्वसा
च्छन्ना लो2त्रमिवोत्किरन्नि चपला कान्त्या पयोराशिषु ॥

112. उर्वी बाष्प विनील धूमलतिका उद्गत्य पौरस्त्य वा-
र्धाराप्रोततमा विभान्ति जलमुग्वाहेन वर्षोदकात् ।
आद्यादेव भया कुलेन लयकालाब्दै स्सम तोयदा-
नन्यान् स्वैरगती न्नियन्त्रितुमिवा वद्धा अयश्शृङ्खलाः ॥

113. निराटङ्कं जोषं दिवि विरचित स्वैरगमने
पुरा सूर्यस्येन्दोरपि रथयुगे सप्रति घनान् ।
अरै स्स्वप्रत्यूहान् शकलयति, गच्छद्रथरवा
इवाकर्ण्यन्तेऽमी व्यथित जल मुग्घोर निनदाः ॥

114. अनुसंवत्सरपीतसागर जलाधश्शीन लावण्य नि
र्भर भूयिष्ठ पिनण्डमध्य दृषदां प्रस्फोटनायोद्यताः ।
ज्वलदैरम्मद वह्निना, प्रति भयान्निर्मान्ति शब्दानमी
सतटि दर्गजित कैतवाज्जलधरा नक्त दिवा सर्वत. ॥

1 विम्शतिवार्षिकगजा
2 स्तेय धन

115 सूर्यो स्राजलराशि जीवन कणान् पीत्वा तृषार्तो जल
स्पर्शोद्यद्धन धूमवार वरणादुद्गत्य लक्ष्याः क्वचित् ।
वाता धूत तदन्तरेषु, विगलद्बाष्पा इवोत्कम्पिन.
दृश्यन्ते हरितान्तरेषु चपलासाराः पयोदा अपि ।

116. भूमीजीवनमोषको रविरसौ, मित्र रिपोश्शास्त्रव ,
तस्मात्तत्पुनराहरामि धरणे रित्या नृशंसावत ।
स्वर्भानो दिवि भानुबिम्ब कबलीकारोद्गतस्यायता
तावन्मूर्तिरिय विभाति गगने कालाम्बुदव्याजतः ।।

117. उद्गत्य भुमि।श्रवसो महेन्द्र
धनुश्शताङ्घ्रे र्बहुवर्णकस्य ।
खभित्तिमाक्रम्य च सर्पिणो नु
पादा दिगन्तेषु पयोदधारा. ।।

118. सर्वान् वारिकणान् ग्रसन्ति पततो भूम्यै ससस्यै पुन
र्नैते चातकपोतका हि जहति द्विश्रान्त्र वेति क्रुधा ।
नाली गोलच्यान्निरस्यति घनो धारा मुखेभ्य. खगान्
दूरीकर्तु मिवापतन्ति शतशो वर्षासु वर्षोपलाः ।।

119. फळ फळ निसदैः किञ्चित् तिर्यग्ललिता जवेन पवनेन ।
वृष्टेरादिमधारा आर्द्रीकुर्वन्ति गेह मध्यानि ।।

120. तदनु द्वैतीयीका विकीर्य करकांस्तदीयशैत्येन ।
उत्क्षिप्य धूलिबाष्पान् मृत्स्नागन्धान् प्रसादयन्ति नवान् ।।

121. पश्चात्तार्तीयीका चपला निचयैर्ग भीररसितैश्च ।
निभृतैश्शीकरनिचयै रन्ध्रीकूर्वति जगदिदं निखिलम ।।

1. वल्मीकात्प्रय

122 धारोपरि धाराधरधारा निपतन्ति तदनु डोलानाम् ।
घनलम्बि शृङ्खला इव जलमयमातन्वते च जगदखिलम् ॥

123. स्फुटयन्तीभिरिव धरा झञ्झायुत कुम्भवृष्टि धाराभि ।
एकीभवतो द्यावाभूमी उल्लोलकल्लोलै ॥

124. पर्जन्ये शिखिपात्रनर्तनपरे मार्दङ्गिके मारुते
जीमूत मुरज निनादयति तन्निक्षेपणोत्क्षेपणै. ।
शोणप्रान्तगुलुच्छ पाण्डुगुण सङ्घाती भवन्त्यापत
द्वार्धारा अपि चेन्द्रगोपनिचयास्सौदामिनो रञ्जिता. ॥

125. आदौ सन्ततवान्तवायुहतवर्धाराभिरार्द्रा जना
स्सङ्गुप्ता अपि कुत्रचिन्न च पुनर्नियान्ति तत्साम्प्रतम् ।
निर्यत्स्यन्दतता हरेर्गतवतोर्मेघे तटिद्वीरुधि
प्रागुत्क्षिप्तपताकता निजपुरं गच्छेयुरेते कथम् ॥

126. विश्वस्य चाम्पेयचयं वसन्ते,
[1]दधुर्वनान्तेषु जनास्त्विदानीम् ।
काङ्क्षान्त्यहोऽस्मानिति केतकानि
हसन्ति लोकानिव तान्, स्फुटन्ति ॥

127. अश्रान्त दिवि नन्दनोपवनगाः फुल्लद्रसा केतकी
वाटी सून सुगन्ध तत्पर मुहुर्यात्रासु विद्युल्लताः ।
तत्सौरभ्य सुखैक सङ्गत भुजङ्गाश्लिष्ट तत्केतकी
गाङ्गे यच्छवि सून कोमल दलव्याजात्तथैव स्थिताः ॥

1 अस्थापयन

128. स्थित्वा नन्दन निष्कुटे परिमलान् सगृह्य वर्षाघनै
स्साकं भूमितलं गताः प्रचलितैर्गन्तुं च तैरक्षमा ।
आश्लिष्टा नवगन्ध लुब्ध भुजगैस्सर्वत्र शम्पा इव
द्योतन्ते भुवि केतकी सुमनसस्सौवर्णगर्वापिहा ।।

129. ऊष्माध. पतिते क्षुमान्मथधनुर्वर्षासु वर्णत्रय
त्वग्भस्मच्छदज वहद्दृढतर पञ्चेषु निष्पीडितम्
मुक्तालि करकामिपाद्भमति नैवेद हरे; र्नो भवे
द्वल्मीकात्तदिति प्रभाति स धनुर्वर्षोपलो वारिदः ।।

130 अपिबद्भानुरपो नितान्त मखिला, वर्षेदवश्य, भवे
दतिवृष्टि,र्न तथा भवत्वलमनेनाब्दायिते नाम्भसा ।
सुफला,येति विरिञ्चिना विरचितस्सेतुर्विभात्यम्बरे
परिवेषस्य मिषेण नूनमभितस्तिग्मत्त्विषो मण्डलम् ।।

131. अन्तरिक्षस्थलीरङ्ग नटन चतुर
नीलनेपथ्यकालिकाक्षिच्युता हि ।
विस्फुलिङ्ग समूहा इवेन्द्रगोप
जालका स्सर्वतो नभस पतन्ति ।।

132. सुधाबिन्दूनमावस्या विधोरादाय रश्मयः ।
रवे, र्वषन्ति करकाव्याजेन जलदायिताः ।।

133. धरणी प्रोत्थित बाल घास निचयस्तस्योपरिष्ठात्तरा
राजन्ते मृदुलेन्द्रगोपनिवहा, श्शश्वत्पयो दोपरि ।
उद्यज्जिष्णु धनुः प्रभाश्च हरिताश्शोणाश्त्र वाश्शीकरै
राद्राश्च क्रमशो द्रुताश्च पतिता विष्वग्धरायामिव ।।

184. स्तनितोद्भिन्नविदूररत्न पुलक भ्राजिष्णुभू मी विस्ट
त्वरबाहुश्शयितं हरिं प्रियतमं गाढं समालिङ्गितुम् ।
विलसत्कङ्कणनिक्वणेव च तमां राराज्यमाना नदी
यवसाञ्चन्नव कर्दमा जलनिधिं भीत्या विशत्यञ्जसा ।।

135. विरते कोकिलपञ्चमनादे मायूरषड्जरव एव ।
अमृतायतेऽब्धि जिगमिषुसरितां दूतीव रसितविमुखीनाम् ।।

136. पीतसुधांशु सुधायत तनुराहुशिरोधिचक्रघात इव ।
असिताम्बुदमणिधनूराभाति प्रतिसूर्यबिम्बमिव चक्रम् ।।

137. शतकोटेः खरतां पयोमधुरतां सर्पाशिनां मत्ततां
चपलावह्निरुचिं विधातुमपिबत्सप्तार्णवानां रसम ।
करकानच्छबलाकिकास्सलिल निष्यन्दञ्च धाराधरो
लवणेक्षुद्रववारुणीघृतदधिक्षीराब्धिनाम्नां भृशम्

138. विद्युत्कौपीनधारी मणिधनुरमलाषाढपाणिश्शिलीन्ध्र
च्छत्रं बिभ्रत्सुवर्णान्यपि च भुजगभुग्बर्हं तालीदलानि ।
गृह्णन् जीमूतनीलो घनरवकलितोऽधः कृतक्षोददैत्यः
प्रावृड्विष्णुः प्रपेदे मरुदुपरचितं पादपनीयपूरम् ।।

139. प्रबलतर वर्षधारा सारपरित्रस्तपन्नगोत्क्षिप्ताः ।
वल्मीकबिलपिधानायेवच्छत्राणिभान्ति हि शिलीन्ध्राः ।।

140. स्वेच्छाचारमहार्गलः किल पुरोऽङ्गारोऽतिघोरो मुहुः
न्योम्नीति प्रतिधेन दारतनयैस्सत्रा धरित्री तले ।
मेधापास्तकुजस्य सूनव इव स्रस्तास्समन्तादमी
एजन्ते ललितेन्द्रगोपनिचयास्स्वैरं क्रमन्तोऽरुणाः ।।

141. वल्मीकान्तर्गमयत्यहिताहिचयं धनोऽयमिति भेकाः ।
सङ्घीभूय नुवन्तीवाकर्ण्यन्ते मुहुर्घनाध्वानाः ।।

142. शरीरकान्त्या तटिदां प्रभाभि
र्दिनं निशां रात्रिमहस्ततान ।
धनस्समान् स्वापयतीन्दिरेशः
तं चापि निद्रापयतोऽल्पमेतत् ।।

143. गङ्गाजलेन धनपात्रगृहीतमृत्स्ना
प्रक्षालनाद्युवनिता परिमण्डनाय
इन्द्रेण तत्र परिशिष्ट सुवर्णधूली
रेखेव भाति चपला रजसि प्रशान्ते ।।

144. अग्ररन्ध्रप्रविष्टवर्षाम्बु पक्व
पीन जन्तुफलेभ्य आगत्य वीक्ष्य ।
दावधूमशमं मशकालिरद्य
गोष्ठिमातनुतयिव विश्रान्तिमेति ।।

145. अभ्रेऽभ्रैरच लेषु केकि विलसतिपञ्छैश्च वर्षासु सं
छन्नेषु क्षणगोचरा अनुपद चागोचरा रेजिरे ।
फुल्लद्वत्सककेतकी सुमरजो दूर्वाः स्फुरद्वारिभृ
न्मायाकार कलाप्रदर्शन लसन्नश्यत्पदार्था इव ।।

146. गिरितट जम्बूफलर स जातनदी क्लिन्न सानु संसर्गात् ।
जाता जलधरकायेऽष्टापदरेखा विभान्ति तरिद इव ।।

147. अनुसुरभि निवृत्ते सप्तलाशोकचूतां
बुरुह कुवलयानामुग्दमे मन्मथाय ।

ककुभ कुटजनीपा यूथिकाथो कदम्बो
ददति सुकमलम्बान्, केतकी मण्डलाग्रम ।।

148. नटनपरकेकिनां गिरितटीषु घनयवनिकायन्ते ।
जलदा, स्तालायन्ते स्वनितास्त[1] खाद्यमानपर्णानाम् ।।

149. रुच्यं स्यादिति नीरदो लवणवार्धि चाथ दध्यम्बुधि
पीत्वा तद्बहुकालपर्युषितमित्युद्वेजितश्चावमत् ।
तद्घ्नः शकलाः पतन्ति करकाव्याजेन नो चेत्कथं
तेषां खादनतो भवन्ति रदना उद्वेजिताश्चाम्लिताः ।।

150. त्यक्त्वा सकर्दम भुवं घनसंवृताऽच
लोच्चस्थले मृगकुलं, हरि धन्विराजे2 ।
कादम्बिनी यवनिकान्तर जन्तु सन्दो
हाच्छौदनार्थमिव चोदितमारराज ।।

151. आर्द्रीकृत्य शिरस्ततश्च सकलं कायं पयोवार्षुकं
जाड्यादावृत पक्ष्मनेत्रशिखरे तिष्ठच्च नासोपरि ।
मुक्ता विभ्रमभृच्च नीडजगणैः पीतं च किञ्चित्तत
श्शिष्टं नीडतृणापनुन्नमभवद्वक्षो निलीनाङ्घ्रिभिः ।।

152. सन्ध्याकुङ्कुमसङ्क्रतखे काश्मीरति विधूपलति सूर्यः ।
नो चेदेवन्नु कथं वर्षत्यम्बूनि तिग्मरश्मिरयम् ।।

153. पारावारजलेन सूर्यकिरणाली गुर्विणीत्वं दिवा
यातायां निशि मत्सराच्छशिकर श्रेणिश्च गर्भेच्छया ।।

1. मेघैः 2. राट् (चतुर्थी)

पातु तत्सलिल वलाहवपुस्सङ्घृष्य तारापथे
गर्भञ्चापि बलाकिका कपटतो वर्षासु धत्ते तथा ।।

154. हंसै र्घनरवभीतैरलकानगरीं जवेन गच्छद्भि. ।
मुक्ता बिसलवविसरा इव सितकरका· पतन्ति वर्षासु ।।

155. तटिदुत्सारितफणितति निर्भक्ता जहति न शिखिनो नटनाम् ।
अशनायाच पिपासा स्याता नानन्दकारणे तु सति ।।

156. कृकलासा नादित्यं नालोक्यान्न बुभुक्षवश्चापि ।
गगनैकबद्धवीक्षण माला स्तद्दुर्दिनेष्वभवन् ।।

157. सन्ध्यस्वर्ह्यं ददता ।
विप्राणा मर्यमाय विचिकित्सा
आसी द्गहोन्मुखीनां धेनुनां कानु सन्ध्येति ।।

158. हल्या जीव कुलानां बलाकिकानां गणानां च ।
बीजावापन काल स्समजनि नितरां समीचीनः ।। ।

159. गिरिमल्लीमुकुलानां सन्धाव्यापारवर्तिनां चापि ।
विदलनमभवन्नितरामाडम्बर मुखर मुदिर वर्षासु ।।

160. आनन बन्ध स्समजन्य तिथीनां महिषशाबकानाञ्च ।
निद्रा भङ्गो मृद्गृहभाजामपि भामिनी वियुक्तानाम् ।।

161. ना भून्नङ्वल कर्षणं पितृपतेर्वाहस्य मे वाहन
स्याभूत्पङ्किलकर्षणं न मम गौरीशस्य चापीति, ते ।
मन्वाते इव वाहने पितृपतेर्गौरीपतेरत्यज
न्निश्शेषौक्षिक सर्वं सैरिभकृषिं दृष्ट्वा कृतां सर्वतः ।।

162. आलीकर्दम दमने ह्यालिकपदवेष्टिता जलव्यालाः ।
सौवर्णवर्ण तुन्दा बिरूदा इव कृषि विपश्चिदां भान्ति ।।

163. प्रतिगृहाटनमन्तराग्निर्न लभ्यते
लब्धेऽपि न भवनान्तरतृणेन
वीजनेन च विना ज्वलति च ज्वलितेऽपि
श्रममात्रमेव नान्नं तु भवति
भूतेऽपि न भविता सूपादि सूपेऽपि
सति भोजन सुष्ठु नैव भवति
धूमिते वेश्मनि पक्वान्नमादिम
पङ्क्तिमात्रस्य पर्याप्तिमेति
पचति गृहिणी पुनस्सती भोजनाय
न गणयन्ती च गृहदारु पर घृतानि
अन्तिकाज्वालनाय नान्नानिशीथ
मङ्गजार्तेऽपि भर्तरि नाभिसरति ।।

164. शम्बत्रस्त गृहस्थ भीरु जनता निस्सारिते शोधित
स्थालीवारिणि कान्तिमुद्वमति तद्धूमाविलान्यर्जुनैः ।
आच्छन्नानि कुटीरकाणि जलदा आक्रम्य नीरैर्भुवं
गन्तुं नागभुवाभिषेणनकृते सन्तीव विद्युद्बलैः ।।

165. वातोद्धूतपटैः करस्थलगुडैच्छत्रैररं धावत
पान्थान्हृत घना निरन्तरजलैस्सन्तापितान् तन्वते ।
कायान्तर्गतवारिदार विरहाग्ने रुग्रतापं मनाक्
तेषां शामयति ध्रुवं गरलमप्येकत्र पीयूषति ।।

166 दूरपतद्वर्ष भयाद्विट पिगतान् पूर्वपतितवर्षाम्बु ।
वातचलितशाखाच्युतमकरोदार्द्रान् घनोदकात्पूर्वम् ।।

167. रथ्यावेदिनिषण्णपान्थजनता भीतापतद्वर्षणा
दन्योन्यं कलहायते "हयपतिर्वीरो गजानां पतिः ।
तस्मादप्यधिकस्ततो नरपतिश्शौर्योन्नतश्चेति त-
त्सैन्यानां बलनिर्णये च, विरते निर्याति वर्षेऽञ्जसा ।।

168. निर्मित्सया बलि भुजो मुखलग्नघासा
रथ्या पलाशिषु कुला यततेश्चरन्तः ।
स्पर्शात्तृणस्य नितरां धनवत्पुरश्री
ग्रैवेयनीलमणयो विमला भवेयुः

169. भाद्रः पुनर्वसुभगोप्तसुपक्वसस्य
सुस्वादु मञ्जुकणिशानि ददाति यूनाम् ।
आनीत काञ्चिकवधूकुचकुम्भयुग्मं
क्षेत्रे कुटीच कठिनं पृथुमर्दनाय ।।

170. भूरण्डी कुणुजप्रपुन्नट दलान्याम्लच्छदैर्व्यञ्जनं
पक्वीकृत्य कृतं सतैल मजहृद्बाष्पं च जग्ध्वौदनम् ।
मञ्चेच्छागविडन्तिके वनगताम्बैर्लिह्यमाना मुदा
वत्सैः प्राभवयुक्त रेड्डिकुलजा वर्षेषु संशेरते ।।

171. आपीतमणियष्टिकासीनकेकीनि
नादामृताश्चिरायोत्थिताश्च
आमोदि सुमगन्धराज सम्मर्दिता
ङ्गाश्चिरङ्कारितमज्जनाश्च
धृतपट नवरत्नहार केतकयश्च
यामोर्ध्वमुपगतास्थानकाश्च
भुक्त्वा सजाङ्गल पललशाल्योदनं
हय्यङ्गवीनेन समधिकेन

कस्तुरी वीटिकाकान्तिमसृण दशन
वसनकाज्ज्वलदगुरु हसन्तिकाश्च
सौधवातायनागत चञ्चलांशु
लोलनयनावरोधैर्नृपा हसन्ति ॥

172. इत्थं गतेषु सान्द्र सलिल धारा सारमासरेषु
वार्षुक वासरेषु ।

173 ततः —

## "शरदृतुवर्णनम्"

174. क्रौञ्चगिरीन्द्ररन्ध्र पथिकत्कलहंसकुलश्शरावली
वैजननश्च यज्वहुतभक्त हुताशनकश्शरद्दिनः ।
आविरभूत्तती जनित बोध भुजङ्ग शयोपचार नी
राजित फुल्लहल्लकसरास्सरसीज रमासमागमः ॥

175. विद्युद्दीपज्वालावान्तै धूमैरिवाच्छन्नम् ।
आसीन्नभस्थलं हरि मणि जम्बू फल विनील विमलरुचि ॥

176. सान्ध्यराग वीचिका सामिरञ्जित
शारदा घना विभान्ति नभसि ।
कालिक घन सार नीराजनानीव
सुप्तबुद्धमामनोहराय ॥

177. भ्रमरगरुद्विनील विमलाम्बर बिम्बित पूर्णपाक नि
र्दलित महाफलौघहरितच्छदकर्कटिका वनालिवत् ।
विलसति सान्ध्यराग लवरञ्जितशालिवनी भ्रमच्छुको
त्करपरि दृश्यमान सित शारद वारिद भङ्ग सञ्चयः ॥

178. घुणगण विहरण विशिथिल
मणिधनुरुद्गीर्ण पांसु सङ्घ समाः ।
मुकुरनिभनभसि परिणत
शणशकलाऽऽपाण्डुवारिदा भान्ति ।।

179. मार्ष्टुं शरदङ्गनया रविशशि मुकुरौ विभूतिरिव निहिता ।
पवनाहत सप्तच्छद पराग समितिर्विभाति दिवि धवला ।।

180. वातान्धश्शयनोद्गतेन निहिते विश्वम्भराधारिणाऽ
वष्टभ्याङ्घ्रि युगे निमग्न धरणी दम्भोलिरन्ध्रोद्गता. ।
पातालस्थधुनी विनिर्मल पयस्स्तम्भा इव ज्यातले
राजन्ते कणिशानि पुष्पितशरस्तम्भव्रजे सर्वतः ।।

181. सुप्तोत्थिताम्बुज विलोचन पातसङ्गा
दङ्ग प्ररूढ पुलका इव भूमि देव्याः ।
सर्वत्र पाकपरुषाणि विभान्ति शालि
कि शारू चारू कणिशानि वसुन्धरायाम् ।।

182. भूयः कुम्भजनिः पिबेदिति भिया सूर्याशवस्सागरं
शम्पाकै तवतस्सहौर्व मनयन्नाकाश मत्रापि सः ।
नूनं सर्वमपात् ववर्ष घन इत्याचक्षते तत् कथं
दृश्येरन् ग्रहतारकेन्दुमणयोऽगस्तिश्च तत्रान्यथा ।।

183. मलयाद्रिः प्रददावगस्ति कतकं वार्देवताभ्यश्शर
त्सरसीषु प्रतिबिम्बकै तववशाखा भङ्गहस्तैर्भृशम् ।
जघृषुस्तीर शिलातलेषु सलिलं स्वच्छं बभूवात्र त-
ल्लघुतासाक्ष्यः मुपैति किं घनरसं तारोदये स्वच्छताम् ?"

184. कुण्डाम्भस्सु शरत्सरोजनयना सिक्ता. पयोदात्यये
1द्योते भास्वति निर्मलार्थ रत्नी चूर्णा इलायास्तुलाम् ।
आनेतु सुधयेव भान्ति सरसीरङ्गत्तरङ्गावली
फुल्लाम्भोज कदम्बकैरववनीक्षोदच्छटाः पिङ्गलाः ।।

185. 2हैरण्यान् जलदात्याभिध कलादः पद्मिनीनामल
ङ्कारौघान्प्रचिकीर्षु रीश्वरगिरे रूप्यं समाकर्षति ।
क्रौञ्चाद्यायस पट्टिका सुषिरतो नूनं शलाकायितं
तन्न्वेतत्सरसीषु हंसमिषतस्सर्वत्र सन्दृश्यते ।।

186. कासार पङ्कजदलेषु नितान्तरुच्य
स्वच्छाम्बु बिन्दु निचयो घटसम्भवेन ।
रत्नाकरोदकसमं नु पुरानिपीतो
मुक्तौघ एव परिमुक्त इवाद्य भाति ।।

187. यातेऽधस्सरितोदकेषु सिकतास्तोमे च मेघाम्बरे
निर्धूते विराहाग्नि तप्त करकञ्जाते सामंजीरकैः ।
पद्मिन्या इत पाणिना विनिहितो नूनं गुडो विद्रुतः
किञ्जल्कैर्मधुवद्विभाति मलिना मुक्ता द्विरेफा इव ।।

188. जलजदलस्थ वारि च दलान्तरबिम्बितखं च पश्यता
मनसि विचार्यते लघुतरं कतरन्विति भङ्गपाणिभिः ।
भ्रमर गुणै स्सरस्सु तुलना विधिना लघुनीरमम्बरं
गुरुतरमित्य भूदवगतं गमनेन तयोरुपर्यधः ।।

1. आतपे 2. हैमं रौप्यं

189. तीरस्थैर्मधुतुन्दिलैरवनतैःपुण्ड्रेक्षुभिस्संस्रवत्
माध्वीकैश्च सरोरुहैरुपरि सम्भ्राम्य द्विरेफारवैः ।
कासाराः प्रतिभान्ति घोषमुखर स्तम्भै स्सहेक्षुद्रवै
र्यन्त्राणीव नियोजितानि शरदा पुण्ड्रेक्षुनिष्पेषणे ॥

190. हलनमत्कदलि कन्दाभातिर्यङ्नता
स्येरद स्तस्याङ्कुर इव भाति
रात्रि गण्ड च्युतं चिबुकाशीनं मद
जल मञ्जन ग्रन्थिमनुकरोति

सङ्कुचद्व्याकुचच्छिद्रोत्थहृतवल
त्कद्रूज इव करश्चाचलीति
अम्भोगताश्शरा लोष्टवः फेनवत्
पङ्कवत्प्रावृषं स्मारयन्ति

धूलिवर्षान्निमीलति नयनमुपरि
जृम्भके कटि. पर्शुका चर्म चलति
ददति दानं नदीभ्यश्च तदनुकारि
गोभिरपयान्त्यलय, इभा उत्खनन्ति ॥

191. गण्डद्वन्द्व विशङ्कटस्रुतमदाम्भोराजि युग्मेसिता
भ्रक्षोदेन युते प्रकी1र्णक निभे कर्णातिगे दन्तयोः
उत्खाता चल मृत्सु कोश सदृशं विभ्राजमानास्विभा
ऐन्द्रेभ प्रतिमा स्समीकसमयं राज्ञां समाचक्षते ॥

192. नाप2राध्द पृषत्का वनीय तूणगतैश्शरैः ।
स्वकैरिवाप्तया कीर्त्या फुल्ला भान्ति शरा वने ॥

1. यापर. 2. लक्ष्यादच्यृनलाव्यक.

193 पङ्काद्रिषण्ड1ककुद संलग्न शरगुच्छका: ।
भान्त्यद्रि शिखरा ग्रस्थ वान्तवारिघना इव ।।

194. नभोलक्ष्म्या स्वनक्षत्र[2] माला धावन मर्दनैः ।
व्याप्त फेनिल[3] डिण्डीरा इवाभान्ति सिता घना: ।।

195. [4]प्रार्णो वारिधरो गृहीत मुदधेर्द्रव्यं पुरा दत्तवान्
वृध्द्या साकमसौ बहोश्च समयात्तेनाधमर्णाहि सः ।
मुक्तस्स्वच्छतया विभाति वपुषो मध्यस्थ जीवस्तरां
तोयापाय विपाण्डुमेघ पटलान्तश्चन्द्रमः कैतवात् ।।

196. श्वेता भ्रौघावृत दिनमणि विष्णुरालोक्य सोऽयं
नूनं स्पृष्टो लशु[5]नपटकेनेति नैतच्छुभाय ।
इत्थं पश्यन् सपदि वलयं मोचयन् शून्यतृष्णः
शुम्भत्प्रज्ञः कलशजलधौ राजते प्राप्तलक्ष्मीः ।।

197. आदित्या हुतभुक्प्रदीपनविधौ श्वेताब्दतूलोच्चय
द्योरत्न स्फटिके निचिक्षिपुरथोऽसावाश्रयाशः क्रमात् ।
जातो वृद्धि मुपेत्य तापयति हाः सर्वानिव प्रोच्चकै
र्मुक्याब्दश्च घनातपोऽम्बरतले भूमीतले जृम्भते ।।

198. प्रातस्सायं सन्ध्या रञ्जितकाष्ठं च मध्यतो नीलम् ।
प्रकृति किराती नासा भूषा गुञ्जेव राजते गगनम् ।।

199. कणिशास्याश्शुका भान्ति सङ्गता नीडगामिनः ।
पक्वाश्छेद भयोद्गच्छत्केदारा इव सच्छदाः ।।

1. गोपति. 2. सत्पविंशति मौलिका 3. कस्यचिदृक्षस्यफलानि 4. प्र+क्वण वृद्धि. 5. रत्नदोष ।

200. काम सारथ्य कृद्रतिकल्पमञ्चस्थ
कान्ताश्शुकव्रजं चोदयन्ति
क्षिप्तेऽपि कुवलये निष्फले चल जटा
कुचयुगं करतले ताडयन्ति
अपमार्गमाख्याय च विहृस्य लज्जन्ति
परिवृत्त युवकपान्थान्निरीक्ष्य,
आश्रयन्ते कञ्जकर्णिका. श्रिय इति
यच्छ्रुती. कर्णिकायुगमिषेण
गोपिकारदनाधरानुग्रहार्थ
पतित निर्गत मौक्तिके क्षूश्च पान्ति
जङ्घिका निर्जिताः पादपद्मयुगल
विनत शालीश्च शरदि सरक्षयन्ति ॥

201. नीलीभूय तृणग्राहि बभूवेवाम्बर तदा ।
शाल्यादि घासो गिरिवद्धर्षति स्म विहायसम् ॥

202. श्रद्धायुक्त सितातपत्रि रचिते यागे यमि श्रेणि स
ङ्कीर्णेऽस्मिन् सहलक्ष्मणेऽभ्युपगमद्रामे घनान्ते ऋतौ ।
सर्वत्रापि वकुतस्थ पुङ्गव विला सालङ्कृते भञ्जिते
ष्वासे च प्रविभग्नशालि धरणिर्देदीप्यते सीतया ॥

203. मेघापाये चातपे दीप्यमाने
कीरच्छायारञ्जिते विष्णुपादे ।
लोका बिभ्यत्यागतश्चण्डभानुः
[1]पालाशाश्वस्यन्दनः किन्न वेति ॥

1. हरि दश्वः किं शुक

204. सरसीकैरवैर्भूमौ दिव्यधास्ताद्ग्रहोडुभिः ।
स्वलीनात्तमसो नूनमतिनीलायते नभः ॥

205. तर्णकचिन्तानिस्सृततटचर गोक्षीरयुग्जलं मापुः ।
पथिका इति धात्रादिष्टाश्वदाभाति हंसनिचयोऽप्सु ॥

206. तदोपसर्यामनुगन्तुमक्षमो
सुमास्त्रतापद्रुतमेदसा मनाक् ।
च्युतै रवैर्भुग्न समुत्थकण्ठतः
जगाम गो त्रामनुसृत्य गोपतिः ॥

207. सिन्धोर्निपीते ससिले समग्र
वान्ते ततोऽधस्स्थित सैन्धवेन ।
शरीर नैर्मल्यवशाद्विभान्ति
सिता ध्रुवं शारदनीरदौघाः ॥

208. सागरनिपीतसलिले वान्ते मेघत्वमपगते किरणाः ।
किरणायन्ते मेघा लुप्यन्त्योजायते नभोरत्नम् ॥

209. कृत्स्ननिपीताम्भसि निर्याते पातु पुनश्शरन्मेघाः ।
प्रतिफलितशरव्याजा द्विभान्ति सलिलाशयान् विशन्तीव ॥

210. सरसि करटियुग्मेनोद्धृतेऽन्योन्यदत्त्यै
दलदरदरविन्दे स्यन्दमाने मरन्दे ।
शरदि सरसिजातावासपद्माभिषेको
द्धृतससलिलकुम्भद्वन्द्ववद्राजतस्स्म ॥

---

1. गोचय

211. पङ्कजानि निजपांसुमरन्दै
निर्मलोदकयुतानि सरांसि ।
पङ्किलानि पुनरेव वितेनुः
स्युर्हि कारणगुणा ननु कार्ये ।।

212. अपिबस्त्वमब्धिनोरं जलमिदमस्माकमस्तु सस्यार्थम् ।
इति [1]दृष्टिदोषशान्त्यै ददुरर्घ्यजलं घटोद्भवाय जनाः ।।

213. परुषातपतप्तमहीपात्रे पतनाम्नु परिपक्वा ।
सान्द्रतरा समभूदिव शारदहिमधामचन्द्रिका रात्रौ ।।

214. वर्षोप्तमण्डनिचयं सलिले ग्रसिष्णु
दीव्यद्विसारयुत शैवलिनी सरस्याम् ।
दुर्वर्णमीनकलिता तत कोणमौर्वी
बाभास्यते सुदृढवालविनिर्मितेव ।।

215. हंसोऽण्डजः क्रौञ्चबिलावतीर्णः
वेवेक्ति दुग्धं सलिलं त्वगस्तिः ।
घटोद्भवोऽयं परमो जलानि
रजांसि भूभृच्छिखरावतीर्णः ।।

216 मानसगामि मरालीनिहितान्यन्या छदाभिगुप्तानि ।
अण्डान्यभवन् हंसाः केकिन्यण्डानि कुक्कुटीभिरिव ।।

217. अब्देवतानां मुकुरायितानां
मलानि नूनं सरसा नुदन्ति ।

---

1. पाः तस्यकोप शान्त्यै

झेङ्कारनादैः परितो मराला
निर्यान्ति तान्यब्जमरजोमिषेण ।।

218. अभ्रेण किञ्चिदाच्छन्ने रवौ विमु
क्ताहारमुत्क्षिप्य कं विलोक्य
वाततुन्दिलगुहानाद फुल्लबर्हं
मालोक्य चालोच्य सङ्कुचय्य

असुमितकेतकीमीक्ष्यापमृज्याश्रु
दत्वा श्रुतिं भेकपल्वलाय
व्यर्थं त्रिनतकण्ठमीषदेव निनद्य
यच्च किञ्चिच्च चञ्च्वा प्रगृह्य

तापभीतोऽपि सप्तपर्णं विहाय
नीपमधिरुह्य चञ्च्वा परामृशंश्च
पक्ष्मणी शून्यचक्षुषा स्वमभितोऽपि
केकिनिवहो विलोकयन् वर्तते स्म ।।

219. शुष्के प्रभया पङ्कोशिथि लंमायूरबर्हं मविकासि ।
नटनप्रमुदितपर्जन्याङ्कितधटिकमिव राजतेऽरण्ये ।।

220. च्युतफेनपटलसन्दृश्य चक्रस्तनी
म्लिष्टं वदन्ती जल[1]विरुतेन
अश्मनितम्बा मरालहारा पुष्प
धूली हिरण्मय मेखला च

---

1. जल पक्षि.

पुलिन जघन गलज्जलशाटिकान्यस्त
वेतसभुजलता स्वस्तिका च
तन्वी प्रतप्तालिबाष्पा शरप्रति
विम्बहासोच्छवासरञ्जिता च

हल्लकेक्षणकोपिनी भङ्गबाहु
पादपद्मावमर्दन प्रीणिता च
कुमुदमकरन्द लहरीपरिक्रमेण
सिन्धुमनुरञ्जयन्ती सरिद्विभाति ॥

221 एवंविधा किल शरद· प्रकृतिरिति वदन्ती रमा तन्नथैवेति अनुमन्यमानो नारायण अनन्तरभाविनी यामुनप्रमुदिग्विजयकथा वक्तुमुपचक्रमे ।

तादृशे शरत्समये अङ्गीकृतक्षत्रधर्मो यामुन. दिग्विजयाभिषेणनं अवनिपालकधर्म इति आनीतबल षट्कमाकृष्ट सामन्तराजबृन्दं प्रस्थास्यते ।

222 गजघोटस्यन्दनालीकबलितधरणी भुग्नभोगीन्द्रभोग
स्थितरत्न श्रेणिलग्नावनिमणिनिवह सैन्यपादातिकानाम् ।
ध्वजवाताघात घूर्णद्घनधिरवतिरस्कारि तूर्यारवैस्त
द्विजराण्णून करिष्यत्यरिविदलन कृज्जैत्रयात्रामतुल्याम् ।।

223. यज्ञैर्यजिष्यति समागतविप्रवर्यान्
सन्तर्पयिष्यति सदा विविधैश्च दानैः ।
भोगैश्च दर्प्स्यति वसिष्यति निर्विशङ्क
दृ[1]ष्टस्य वाप्यहि[2]भयस्य लवेन हीनः ।।

1. परभय 2 स्वपक्षभयं

224. किञ्चास्य राज्ये तृणदंशनं हस्तोद्धरणं च करिघटास्वेव । गलग्राहः मन्थरपल्लवानां पर्वदिनेषु तैलाभ्यञ्जनाय आनेतृवेश्या-सोदर्येष्वेव । स्नुहीवाहनं, ग्राहकेन ग्रहणञ्च सौधसौवर्ण भूषा-निर्माणेष्वेव । धटीवेष्टनं खङ्गवन्धनञ्च कृकवाकुकलहेष्वेव । अतुल्यतुलनादि घर्षणादिदोषा जाम्बूनद परीक्षास्वेव । अक्षि-पातनं मृदङ्गादिषु आनद्धेष्वेव, धातुवाद. शाब्दिकेष्वेव न पुनरन्यस्थलेषु यथा स्यात्तथा स पालयिष्यति ॥

225· तत्पितामहनाथमौनीन्द्रशिष्य
पुण्डरीकाक्षनामकगुरुवरस्य ।
छात्रतल्लजो राममिश्राभिधान
परमकरुणार्द्रमानसस्स्वस्य मनसि ॥

226. एवं चिन्तयिष्यति "अहो किमेतच्चित्रम् ! क्वायं योग-साम्राज्य मूर्धाभिषिक्तमहात्मनां वंश ? क्वावा धरणीराज्या-भिषेकासक्तिः ? तादृशवंशकरीरस्यास्य अत्यन्तव्यतिक्रमोऽयम् ॥

227. वृषशैल झरवास्त्रिषवणमज्जनमनु
ष्ठायान्हिकान्विधीन् परिसमाप्य
निश्शलाकगुहास्थदर्भासनस्थितः
पुलकिताङ्गो हर्षबाष्पयुक्च
यज्ञोपवीत पद्माक्षमालायोग
पट्टिकाशोभिवक्षस्स्थलश्च
हृदयाम्बर विभाव्यमान लक्ष्मीनाथ
पादपङ्केजातयुग्मकश्च
तन्नगस्थितशौरिमाराध्य दार
पाचितालर्क शाकयग्भक्तमस्य

पितृपितागृह देवरमाधवाय
नित्यमावेद्य देहयात्रां निनाय ॥

228. विषयरतंत्वरयातान् त्यजेति कथनात्किमस्ति विद्वेषः ? ।
कथयन् कथाः क्रमात्तत् सङ्गस्य त्याजनं वरं सुधियाम् ॥

229. नालं पितापि पुत्रं दुर्व्यसनालिङ्गितं निवारयितुम् ।
राज्यव्यसनासक्तं कियान्नु को वापि वारयितुम् ॥

230. तरक्षुणास्त्रं नु यथा निपाय्य
मुखस्थरङ्कुं मृगयु विकर्षेत् ।
भोगालितृप्तस्य मनः क्रमेण
निवर्तयेत्तद्व ; दयं सुपन्था ॥

231. अत इतः परं नोपेक्षणीयम् । कथञ्चिवदुपायेन विषयोपभोगात्तं निवर्तयिष्ये । आहारदोष एव मूलं विज्ञान विनाशाय, इति निश्चित्य–

232. मृदुलाननुदितशूकानलर्कनवपल्लवान् बहुलान् ।
प्रेषयिता मुक्तिसतीकर्णाभरणान् नृपाय सूदेन ॥

233. केनचिदानीतमुपग्राह्यमिदं वैष्णवोत्तमेनेति ।
पाचयिता भोक्ता भूनाथः कांश्चन दिनान्प्रमोदेन ॥

234. अथ कस्मिंश्चिद्दिवसे तच्छाखास्वादतुष्ट भूनाथः ।
वक्ष्यति सूदं शाखानेतारं प्रेषयेति तच्छ्रुत्वा ॥

1. सू. नपूजनात्

235. आयातमूर्ध्वपुण्ड्र भ्राजिष्णुललाटमेनमालोक्य ।
प्रणिपत्य प्रक्ष्यत्यागमनस्य निदानमुर्वराकान्तः ॥

236. कःवेरीतीरगतं त्वत्पूर्वार्जितमहानिधिं भूप ! ।
दर्शयितुमागतोऽस्म्यह मित्याख्यास्यति स राममिश्रस्तम् ॥

237. अपि वक्ष्यति राज्ञो मे कुतो निधिर्वाथ निक्षेपः ।
इति मा वद भूमीगतवसु सर्वं धरणिवल्लभस्य स्वम् ॥

238. भोगरत्नाञ्चित कुण्डली वेवेष्टि
तन्निधिं शान्तश्च पाण्डुरश्च
रक्षोगृहीत इत्यभिधीयतेऽब्देऽथ
वाऽयने वै कदा भवति तच्च
नाकाङ्क्षते प्राणि हिंसादिकं किन्तु
वशमेति बलिनैव चाल्पकेन
लोचनेन निरञ्जनेनैव लक्ष्यते
परिमाणमियदिति चापि नास्ति
भाति च चिरत्नरत्नमपूर्वमुपरि
पद्म शङ्खयुतश्च; किं विस्तरेण
अक्षयमनन्तमाद्यमेकान्त एव
दर्शयिष्यामि तं नृपते तवैव ॥

239. इत्थं तेन निवेदितस्स धरणीजानिस्ससैन्यं गतः
श्रीरङ्गं विमलेषु सह्यतनयातोयेषु कृत्वा प्लवम् ।
चान्द्रे चापि सरोवरे विकचपद्माक्षं प्रणम्याहिरा
ट्पल्यङ्के शयितं रमा सहचरं श्रीरङ्गनाथं मुहुः ॥

240. यदा साभिप्रायं राममिश्रं विलोकयिष्यति तदा स वक्ष्यति ।

241. युष्मत्पूर्वसमार्जितनिधिराजं त्व गृहाणेति ।
श्रीरङ्गपतिपदाब्जे दर्शयिता तेन मुक्तमोहस्सः ॥

242. निजपूर्ववृत्तमधुनातन भोगायत्त जीवितं चापि ।
आलोच्य विकलहृदयो निर्विण्णो वक्ष्यति द्विजप्रवरम् ॥

243. कस्त्व भोस्स्वामिन् कुत आयातः कीदृशी कृपाव्याजा ।
कथमस्मिन् विषयालीमग्नमनस्के जडे प्रसृता ॥

244. इत्यनुयुक्तो वक्ष्यति शृणु राजन् त्वप्तितामहः श्रीमान् ।
नाथमुनिनामयोगी भाविभवज्जन्मविज्ञाता ॥

245. भागवत तल्लजेन विशिष्टाद्वैतं समस्त हितमेतत् ।
विकसिष्यति मत्प्रेम्णातरमात्तस्मै द्वयं त्वमुपदिशतात् ॥

246 इत्यादिदेश शिष्योत्तमं स्वकं पुण्डरीकाक्षम् ।
सोऽपि नियुयोज मां ते भोगासक्ताय समुपदिश युक्त्या ॥

247. इत्यनुशिष्टोऽह गुरुणाज्ञामेव न्यवर्तयं भूप ।
इति वादिनं स राजा प्रणम्य साष्टाङ्गमथ च संस्कारैः ॥

248. तेनैव संस्कृतस्सन् स्कन्धावारं समेत्य तनयं स्वम् ।
राज्ये नियोज्य समुचित बान्धव मित्र प्रधान परिवारान् ॥

249. तस्य निदेशस्य वशान् कृत्वा हस्त्यश्वरथपदातिबलम् ।
निर्दिश्य राजनीतिं बोधिष्यति तं सुताऽवधेहीति ॥

## राजनीतिः

250. अग्लाय भव मनुजान् शृणु दीनानां बिलाप वचनानि ।
अपि च निवारय बाधां कापुरुषे मा निधत्स्व कार्यभरम् ॥

251. क्षेममाकाङ्क्षते लोको लोकक्षेमरतप्रभोः ।
विप्रादीनामन्तरात्मा तत्काङ्क्षां साधयेद्ध्रुवम् ।।

252. आटविकानामाज्ञा प्रचलति काष्ठेन तन्तुना वापि ।
अप्रतिहतेन भाव्यं सम्राजश्शासनेन सर्वत्र ।।

253. दुर्गाधिपत्ये द्विजवर्यमेव
नियुङ्क्ष्व नान्यं; प्रबलैश्च सैन्यैः ।
निरस्तभीकं कुरु तं विपक्ष
चमूनिरासेदृढशक्ति युक्तम् ।।

254. अधिरोपितोन्नतपदो लघुनिरस्तः पुरास्थिति न मनाक् ।
गणयति कुप्यति सेवा लभस्व सौशील्यवर्धितपदेन ।।

255. कुलशील श्रुतिसत्यैर्हीन निर्भीकमाततायिनरम् ।
धृष्टमधर्ममदेश्यं जहि विप्रं चापि पोषणेच्छुरपि ।।

256. कुपथं पक्कणवर्धितमपि विप्रं मुञ्च; सत्पथभ्रष्टः ।
नन्वेकवारभुक्तये दुद्रोह बकाय चातिथेयाय ।।

257. संप्रार्थ्यापि च राज्यतन्त्रनिपुणं षष्टेस्तथा सप्तते
र्मध्यस्थं च विपश्चितं च विमद नीरोगवशोद्भ्रवम् ।
भूदेवं क्षितिराडमात्यपदवीपट्टं यदि ग्राहये
त्सप्ताङ्गैरपि राज्यमेति न चिरात्तस्याभिवृद्धि तमाम् ।।

258. नो लभ्येत यदीदृशो धनबलाढ्यो राट्स्वयं निर्वहे
त्तन्त्रं तत्सफलं नुवा भवतु मावा नैव हीनं गुणैः ।

---

1. अगला यन्+अव

यङ्क्ञ्चित्तु नियोजयेत्सचिव इत्यूर्ध्वं स मुत्तामणिः
कूष्माण्डप्रतिमो भवेच्च नृपतिस्तन्निघ्नवृत्तिः क्रमात् ॥

259. एकस्मिन्नपि कार्ये बहुषु नियुक्तेषु तत्फलत्याशु ।
तैस्तज्जनैश्च; नो चे,त्तेत्स्यात्क्लेशाय फलति चापि चिरात् ॥

260. केवलधनेन कार्यं न भवति श्रद्धावता विना महताम् ।
यत्नेन तेन राजा वशयेत्तान् साधुताऋतालौभ्यैः ॥

261. भाण्डागारहयादिषु सत्स्वपि गुणवज्जनैर्विना तेऽपि ।
राज्ये नष्टेऽरिवश साकं भद्रासनैर्न यान्ति कति ? ॥

262. क्षत्र शूद्रादिपरिहासशङ्कया नु
परवशाग्रज जीविकाज्ञानतो नु ।
सङ्कटेष्वपि नापयात्यग्रजात
इति नृपोऽधिपतिं रचयेत्तमेव ॥

263. नो कुर्यात्सुरमन्दिरेष्वधिपति तं यः करग्राहकः
क्षीणेऽर्थे स तु पूरयेत्सुरधनैः कोशं महादुष्कृतम् ।
तत्तस्मात्पृथगन्यमेव हि पदे तस्मिन्नृपो योजये
द्देवस्वं यदि भक्षयेदपि मनाग्भुञ्ज्यादघं सै[1]वहि ॥

264. आनीय स्ववशं ततश्च कुरुते क्षेत्रे वृतिं कर्षकः
कुद्दालेन मृदूकरोति च यथा निष्कण्टकं तत्क्रमात् ।
एवं दुर्गबलेन वा परबलै राज्यं स्वबाहावशं
कृत्वा राड्विदधीत कण्टकचयैश्शून्यं च तत्साम्प्रतम् ॥

---

1. सः एव,

265. न निरस्यन्नेवादौ सूचकवचनानि मनसि परिभाव्य ।
मिथ्या चेन्न पदात्तं च्यावय भावय तं चैकपक्षीयम् ॥

266. आटविकडिम्बलक्ष्याः पल्लीशशूरास्थिरापरजनानाम् ।
दद्यान्मिथस्तु कलहे सति हित एकैकतरनाशः ॥

267. वत्स ! किं चेदमवधेयम् । तत्पार्वतीयाटविकबलेषु प्रबलेषु मिथस्सङ्गतेषु राष्ट्रीयप्रजापीडा अपरिहार्यैव । अतस्तद्बलान्युपायेन वशमानयेत् । अल्पबुद्धीनां अल्पेनापि हेतुना भवति विश्वासोऽविश्वासो वा, आमोदः खेदो वा रतिर्विरोधो वा ।

यथैकस्मिन् भिल्ले स्वगृहमागते तमन्यः पायसेन सत्करोतीति मन्यस्व । गृहागतोऽतिथिः, गुणार्थमधिश्रयिण्यां पच्यमानवृक्षत्वचमालोक्य, "पलमिति, न तन्मे परिवेवेष्टी"ति, परिविष्टं मोघीकृत्य, स्वप्रेषणायानुगच्छन्तमातिथेयं जिघांसुस्सन्, 'पच्यमानत्वक् दग्धिका भवेत् । निवर्तनायानुमन्यस्वे'ति याचमानं तं, अवगतवृत्तान्तः, तुष्टः गृहगमनायानुमनुते । एतादृशी जघन्यजनप्रवृत्तिः ॥

268. क्षीरान्न मात्रेण सुसङ्गतास्ते
प्रोक्तान्मनाङ्नाटबिकास्स्खलन्ति ।
ईषत्तु दोषादपि यन्ति कोप
मल्पेन किं स्यादिति नो सहन्ते ॥

269. सत्येन वश्या वनवासिनस्स्युः
मित्रायते दूतकृतादरेण ।
रिपुस्तु, भृत्यस्तु सकालभृत्या
मोमोत्ति, सादी बहुमाननेन ॥

270 उत्तम गज माप्तभटस्याधीनं वाजिनं च कुरुः मापि कदा ।
आरोहस्य तु दिष्टे भव्यं भविता च मन्दुरामवतात् ॥

271. कार्यं निवेदयन्त माशब्दिक मन्यमीर्ष्यया चोभौ ।
सन्मान्यादौ पश्चादवबुध्या ह्योक्तकरण मुचित स्यात् ॥

272. बाह्यरिपून् दृष्ट्वान्तस्स्थानपि प्रोत्साहयन्ति दुस्सचिवाः ।
कार्याणि नाचरन्ति स्वानि विना कुर्वते च पतिमगतिम् ॥

273. वसु दापयन्ति राज्ञा स्वेभ्यो नान्येभ्य उक्तमपि पश्चात् ।
अपलापयन्ति च तथान्ये तं भूयोऽपि नोपसर्पेयुः ॥

274. कफमन्दी भूतोदरवह्निं प्रज्वालयति यथा शुण्ठी ।
दुस्सचिवान् दमयन् पतिं मुत्तेजयिता सुधीर्नियुक्तोऽन्यः ॥

275. कथंताननादृत्य परस्य नियोग इति चेच्छृणु ॥

276. कोशश्च कुञ्जरघटा आजानेयाश्च यदि वशे नृपतेः ।
सुधियो बलिनोऽसाध्य किं स्या द्विवदेच्च कोनु वातेन ॥

277. ग्रासैकलोपेन पतिं निहन्तु पश्यन्ति के वा नृपते स्सखायः ।
यच्छामि नैवेति न शक्यते तान् त्यक्तुं न
विश्वस्य च पोषयेत्तान् ॥

278. दृष्टेनैकेन सर्वानपि खलु गणयेत्तद्वदित्यग्रजातं
गृह्णन्तं वीक्ष्य गर्ह्यं फल मयि नृपते याजयेदग्रजो मे ।
इत्याचख्यौ च दित्सुं पशुचयमपि नो कारयामास मौनी
कश्चित्तेन स्वयं यो द्रुपदजनपतिर्मारणेष्टिं चिकीर्षुः ॥

297. आपप्तिपीडिषु रिपुमपि जित्वा मुञ्च सम्पदं गृह्णन् ।
भग्नाशीः किं कुर्यादहिरपि ? विश्वसिति सोऽपि तं सदयम् ॥

280. स्यादर्थ सिद्धि र्धरणी समृद्धया
सात्पापि कुल्याकलिता कराय
दत्ता च दीनस्य धनं प्रसूते
धर्म च दीनं धनिकं करोति ॥

281. नाहूय गतान् पौरान् तत्पशुधनगृहजिघृक्षुरुद्योगी ।
बिलफेरुः तद्वशगस्सप्तद्वीपैर्न वर्धते नृपतिः ॥

282. पादेनायस्य कुर्यादुचित वितरणं कि च भोगानु भूति
भूपस्सेना भिवृद्धि रचयतु नितरां तस्य चार्धेन कोशम् ।
पादेनान्येन पूर्ण विदधतु च रिपून् स्वांश्च चारेक्षणस्सन्
दर्शदर्शश्च पाटच्चर जन निवहं खण्डयेन्निर्दयस्सन् ॥

283. लालितरक्षकबद्धे कारान्यस्ते पलायिते चोरे ।
शूलपृथुवणिजरीत्या तत्स्थानिनि शिक्षिते भवेदयशः ॥

284. जानंस्त्रिभागान् स्वयमेव राजा
शिष्टं च शिष्टैर्विदधीत कार्यम् ।
न दण्डपारुष्यदुराग्रहाभ्यां
ग्रस्थश्शुभं विन्दति पालयन् ज्याम् ॥

285 स्वपन्नगाग्रे नयनेन ऋक्ष
एकेन पश्यत्यपरेण तद्वत् ।
विलोकयेदान्तरबाह्यशत्रून्
सुखेन सक्तोऽपि च भूमिपालः ॥

286. भग्नव्रतैर्दत्तधनाग्रहारैः
जटाधरैर्भिक्षुभिरुद्भवन्ति ।

दुर्भिक्षबालान्तरुजा स्समर्च्या
स्यु रप्यमी षां व्यथया नतेच्चघम् ॥

287. त्रिवारयाच्ञावसरं सहस्व
वध्येषु यस्यापगमे स्वहानेः ।
शङ्का यदि स्यात्तदलं विचार्य
शस्त्रेण कुर्याल्लघु तत्समाप्तिम् ॥

288. शूरोऽपि राजा स्वभटप्रतापा-
लापश्रुतौ नो विमुखीभवेत्तत् ।
प्रमोदमायान्ति हि ते नृपेण
द्रष्टव्यमेव स्वजनेषु शौर्यम् ॥

289. अव[1]तारान् परिवर्धयेद्गजहय श्री खण्डमुक्त स्त्रजा
मवताराय च डामरेति गदसंक्षुब्धान्यदेशागतान् ।
जनसङ्घान्परिरक्षयेत्तदुचितैस्सौकर्यसंयोजनै
र्वनगोष्ठाकरदर्शनाय च जनानाप्तान्नृपो योजयेत् ॥

290. अवेक्ष्य लक्ष्यसंसिद्धि यथा मुञ्चति सायकम् ।
शूरो दोषिणि दण्डं च वीक्ष्यैवावसर न्यसेत् ॥

291. आगामि जीवन निरीक्षणमन्थरं वा
स्रोतश्शनैश्चलतु सैन्यमरिं विजेतुम् ।
साह्योच्छु, चेद्बलिनि वैरिणि तस्य पूजां
गृह्णन्निवर्ततु वृणोतु तमन्यथा चेत् ॥

---

1. नौकाश्रयान्, तीर्थानि

292. गृह्णन्तं प्रसभं करानपशदैरालोचयन्तं भुव.
प्रान्तीयान् ददतं परेभ्य उदयच्छङ्कं स्वकीये जने ।
आप्तै वीक्ष्य नृपं रहोऽभयमहामण्यादि सम्प्रेषये-
द्वैरिक्ष्मापजयाय भेदनपरः तद्दोषहीनो भवेत् ।।

293. स्निह्येत्सुदृढं रिपुणा दत्वा भूम्यर्थमपि यदीच्छेत्सः ।
लुम्पेदहिभयमधिकं व्यथयति नन्वहिभयादपि तत् ।।

294. बाग्भिः किं बहुभिस्स्वपालितमहीमध्यस्थितान् कण्टकान्
ज्ञात्वोत्पाट्य विदारयेदपि तमा निश्शङ्कितस्सञ्चरेत् ।
त्रस्तैणार्भकलोचनासमुदये पुवद्रसानायकः
नो चेत्कि फलमस्ति राज्यरमया दुःखाय सा केवलम् ।।

295. अस्तं नोपायान्तं गृह्णीयात्तमनुसृत्य नैव हठात् ।
प्रतिरुन्ध त्पाठीनं कैवर्तक इव पवि[1]त्रकं मुञ्चन् ।।

296. न, दण्डे पारुष्यं, पिशुनवचनामर्शनविधिः,
विपक्षे सन्धित्सौ सति विमुखता, बैर्यवगुणात् ।
उपायाते शिक्षा, विमतचरिते कार्यममिथः,
न विश्वस्ते मैत्री, तदितरविभेदश्शुभकरः ।।

297. न, दाक्षिण्यं मन्त्रेऽधिकतर, मदण्डः प्रकटने,
समुत्पन्ने डिम्बे प्रतिकृतिविधानेष्वलसता ।
निहीने साङ्गत्यं, व्यसनपरिषङ्गो नरपतेः
सुपूज्यानां पूजाऽकरणमपि, मात्सर्यं मुचितम् ।।

1. शणसूत्र

298. त्रिविधेषूत्पातेष्वपि भोजनबलि होमविधिषु धनमधिकम् ।
द्विजमुख सुरमुख हुतवहमुखेषु राजा व्ययेन्नियतम् ।।

299. प्रभुषु स्पर्धा योधेष्वपि तनुयात्साध्वसाधु तत्कृत्यम् ।
स्फुटति दुरूहो नश्यति हित चिकीर्षन्ति बहुमतौ दृष्टचा ,।

300. विप्रं प्रभु कुरु कुरुष्व बलैस्समेत
तं प्रेषयारिनिकटं बलवान्स नूनम् ।
शत्रु च साधयति नापि रुणद्धि भूपं
तस्मात्परस्तु नृपतेरहित चिकीर्षेत् ।।

301. छेदय वनानि मध्ये देशं चान्तेषु पोषय नितान्तम् ।
जनबाधक चोराणा निलयायेरन् वनानि यदि मध्ये ।।

302. आरण्यक दोषमृगेणाल कुड्यस्य मार्जमेंनेव ।
दानऋताभ्यां वश्यास्ते रिपुभूडमरकर्मणे पटव. ।।

303. द्वीपजगजहयवणिजाम् स्वीयान् दत्वा गृहान् ।
लाभं ददच्च नाऽरि सेनाङ्ग प्रापयेत्कथञ्चिदपि ।।

304. विषयानन्तरभूपतिदूतान्मानय सभासु सल्लापैः ।
तन्नृपकार्यमकार्य स्फुटयन् वद तत्प्रमादजनितमिति ।।

305. प्रभ्वीकृतं तु नूत्नं नाह्वय मन्त्राय स प्रकटयेत्तम् ।
गौरवमुदित', मन्त्रः कदर्थतामेति सोऽधिकारी च ।।

306. हितान्बहुश्रुतान्धर्मरतान्शूरान्कुलानुगान् ।
दुर्गाधिपत्ये भूमीपो विप्रानेव नियोजयेत् ।।

307. व्याघ्रीपयस्य प्रभृति दुर्लभार्थान् समाहरन् ।
पुरुषायुषपर्यन्तांस्तद्दुर्गेषु प्रकल्पयेत् ।।

308. सामन्तभूमिपालानां पूर्वोक्तमनुचिन्तयन् ।
उर्वरा वितरेदीषद्यथा न स्यद्व्यतिक्रमः ।।

309. आयाधिकाल्पव्ययकैरनुद्विग्न प्रजाहृतैः ।
करैर्धनैर्हिरण्यैश्च भाण्डागाराणि पूरयेत् ।।

310. क्षीयमाणं रिपुं चारैर्विदन् तस्य महीं हठात् ।
गृह्णीयाद्बकवद्राजा प्रजाः किञ्चिदबाधयन् ।।

311. एतादृशगुणोपेतः प्रजारञ्जनतत्परः ।
निद्रागाढ परीरम्भ सौख्य सन्ततिमश्नुते ।।

312. गजघोटक तद्ग्रासक्रय भट जीवित निजोच्च भोगार्थः ।
धरणीसुर सुरपूजाविषयश्चार्थव्ययो व्ययो नैव ।।

818. प्रतिजानीयान्न नृपः जयेयमरिमिति गमानुकूल्यं स्यात् ।
न स्याद्वा चिरयेद्वा; कार्यार्थी स्यान्नृपो न समरार्थी ।।

314. रिपुबलविदलनकृत्यै दुर्गमदुर्गेषु प्रेषयेत्सैन्यम् ।
परिवृत्तेऽरिबले स्याद्विजयस्स्वर्गो नु न स्वयं गच्छेत् ।।

315. द्विश्रानुकूलमन्त्रं राजा पुनराह्वयेत्ततोऽर्थी सः ।
मत्तो वदेदनुचितं तच्चर्यां चारचक्षुषा पश्येत् ।।

816. नाशोन्मुखो विनाश्यः प्रान्तारिर्वृद्धिमान् स यदि तेन ।
स्निह्येत् प्रभवति तस्मै तस्मात्तु परो रुणद्धि तं गमनात् ।।

317. राष्ट्रं क्लेशय शत्रोर्गृहाण दुर्गं सुता इव वरोधान् ।
बहुमानय मा परुषं वद दूतैरवसरो भवेत्सन्धेः ।।

318. रोग गरलाभिचार ग्रावाट विदन्तुरोग्ररिपुभूमिम् ।
मा विश मेरुनिभेऽर्थे लभ्येऽपि प्रेषयेश्चमूरेव ।।

319. कपटी प्रियवचनैस्स्वं कार्यं साधयति सेवते तुष्टम् ।
क्लिष्टं जहाति विड्वत् जानीयाद्वस्तुमूल्यमवनीपः ।।

320. तज्ज्ञैस्समालोच्य धातून् परिज्ञाय
परिगृह्य चापि हेमादिकानि
प्रकृति सम्मत जीवनाहृतिग्राहको
दमयन् महाबलं मर्दनेन

स्नेहार्द्रताशेषपोषकस्सञ्जात
वर्णदोषानपाकृत्य किञ्च
सतत द्विज प्रतिष्ठाव्यापृतो तत्त-
दनुगुणं स्थूलयंस्तक्षयंश्च

तेज उद्वेजयन् शोधने कदापि
नालसस्सञ्चरेत्साङ्गराज्यकस्य
पालने दीर्घ जीविताकाङ्क्षि धरणि
पालक स्स्वाङ्गराज्यानुसारमेव ।।

321. सौखशायनिकागदङ्कारदैवज्ञ
गोष्ठिभिः कल्यवेलामपोह्य
यामात्परममात्य सामन्त पूर्वक
मर्थार्जनस्थकायस्थकैश्च

मध्याह्नसमये तु मर्दनमल्लसू
दापूपिकमृगयुगोष्ठिभिश्च
अपराह्नकाले तु देवार्चना सती
धर्माधिकृद्यति गोष्ठिभिश्च
भुक्तिमारचय्य च विदूषकपुराण
कविवतंसरम्य गोष्ठिभिश्च ।
गायकैश्च सान्ध्य समयं त्रियामान्तु
स्त्रीसुखेन निद्रया नयेत ।।

322. श्रृणु राज्ञोऽनुचरा हित हिता हिताश्चा हिता स्सततम् ।
वर्तेरंस्त्रिविधास्तान् जानीया त्कौशलेन धरणीशः ।।

323. दैवज्ञा भिषजः पुरोधनिचयाः प्राज्ञाः कवीशा हिता
ये तु द्रव्यसमार्जने विनिहितास्ते स्युर्हिताश्चाहिताः ।
राजाकृष्टघनाश्च कालवशतः तल्लिप्सवश्चाहिताः
तद्राजापि यथानुकूलहितमातन्वीत नीतिक्षमः ।।

324. अयाचितो भूमिपतिस्सुपात्रे
हठादनुक्त्वा द्रविणं ददीत ।
स्वप्नोपलब्धार्थसम विनैव
सूनेन चञ्चत्पनसोपमञ्च ।।

325. पितृदेवकर्मणोः पितृकर्मज्यायश्च न त्याज्यम् ।
श्रुतिशीलतपश्शाम्ताच्युतभक्त प्रीणनेन नन्दय तान् ।

326. द्विजरक्षणाय दानं ज्ञानं निजरक्षणाय मावन्तम् ।
नारायण[1] मिहि शरण नश्येद्राज्यान्तनारकं तेन ।। (ज्या)

1. गच्छ.

327. भर्तरि भक्ति वंशिता मस्करिणोबान्धवं वधूवरयोः ।
अग्रजसेवन मधिपत्यनुसरणं राजदण्डभीत्यैव ॥

328. हत्वा धर्मी वर्णी गत्वा च सती ऋती वदन्ननृतम् ।
उपवासी भुक्त्वाढ्यो दत्वा शूरो भवेन्न युद्ध्वा च ॥

329. स्वपुरगृही भाषाज्ञश्चारः चारान्तरावेदी ।
न नियतलिङ्गो भूयाल्लिप्साधिक वित्तदान धनिकश्च ॥

330. अनुऋतुमज्जन भोजन लेपन पटकुसुमवाहनासक्तः ।
तनुभृशदमनजसुकृत धनदानेनार्जयेन्नृपतिः ॥

331. नानाषाडवयुङ्नृपभोजनमपराह्ण एव शुद्धेन ।
कोष्ठेन वा च तृषितः भुञ्जीयात्तद्धितं नृपतेः ॥

332. वर्गत्रय समनृपतेरपि धर्मे यदि भवेत्तु तत्परता ।
तत्केदारस्यान्य क्षेत्रोदकवन्मुद जनयेत् ॥

333. जाज्वल्यमानमेक मणिं सदा भूमिपो धरेत्तस्य ।
दिवसानुरूपमणिमय भूषावेषोचिता अवश्यं स्युः ॥

334. अवनीयावनिरेषा मुच्येत कथंनु वृजिनमिति ।
शङ्का मास्तु न वेदो नानुष्ठेयन्तु कार्यमेव वदेत् ॥

335. दोषान्निरीक्ष्य दण्डयान् दण्डशख्यान्विधाय धर्मपरा ।
इति लोके प्रथिता मनु समवर्ति प्रभृतयोऽभूवन् ॥

336. बहुधा ससर्ज धाता पातु लोकान्नृपं स्तुतं वेदैः ।
सराड्विराडिति; विनावनमस्य जनुर्वकेशि किल भूयात् ॥

337. देवसदृशो हि भूपः प्रजावनायास धूर्धरः कामम् ।
राजा भवति न केवलमिन्द्रियसौख्यान भोगेन ॥

338. बन्दीकृतपरदारैः पान्थव्यूह प्रमापणप्राप्तैः ।
लोप्त्रैरिन्द्रिय सौख्यं किमु यन्ति न तस्कराग्रसराः ॥

339. इति राज्यतन्त्र विमुखी भावो भूपस्य साम्प्रतं नैव ।
सोढ्वा क्लेशं भूपास्सु स्थिरकीर्ति पुरातनाः प्रापुः ॥

340. यद्यपि पुरातनानां महती शक्तिर्न तत्र सन्देहः ।
कृतवीर्यसुतो दशशत परिघोपमदीर्घपटु भुजास्तम्भः ॥

341. सप्तद्वीप कुलाचल संभृत विश्वम्भरां वभार भुजे ।
यो यः करोति यद्यत् यदा यथा यत्र यत्र यावच्च ॥

342. सोऽपि गदासिकरस्सन् आज्ञापयति स्म स विधगस्तन्तम् ॥

343. अस्मिन् कलौ युगे वयमबला जटिलानि राज्यतन्त्राणि ।
बहुकुटिलदोष कलुषाः कृतयः प्रभवेम ननु कथं तत्र ॥

344. इत्यपि च मास्तु शङ्का किमिदानीन्तन वसुन्धरा विबुधाः ।
कृतयुग जगती निर्जरदुर्दान्त तपः प्रभाव समुपेताः ? ॥

345. चुलुकीचकार कश्चित्पारावारस्य वारि कृत्स्नमपि ।
भूमिसुरोऽन्यः स्रष्टुः सृष्टेरन्यां ससर्ज सृष्टिमपि ॥

346. ब्रह्मास्त्रमपि च कश्चित् धरणीदेवो निवारयाञ्चक्रे ।
स्वब्रह्मदण्डपाणिर्ज्वलन ज्वालालि दुर्निरीक्ष्यमपि ॥

347. नास्माकमस्ति तादृशमहत्वमिति किं परित्यक्तुम् ।
युक्तं शक्त्यनुरूपं स्वधर्मनिर्वहणमद्यतनविप्रैः ॥

348. किं वामी नोपास्याः तद्वत्कुरु भूमिरक्षण त्वमपि ।
शक्त्यनुरूपं शिष्टे नूनं जागर्ति पुण्डरीकाक्षः ॥

849. दीनानाथशरण्यः शरणागतरक्षक स्वामी ।
सृष्टिस्थितिलयहेतुः कमलाकान्तानिवासितोरस्कः ॥

850. तस्मिन्विनिहितभारो निरहङ्कारश्च निष्फलाकाङ्क्षः ।
कारयतीदं स मया स्वस्मा इति कुरु शुभं भवति ॥

851. धर्मे निबद्धबुद्धिः कुरु कार्यं बहुल जन्मसुकृतेन ।
इन्द्राग्नि वरुणमारूत कुबेर जननानि जातानि ॥

852. धर्मप्रतिष्ठिता भूर्भुवस्स्वरादय इमे लोकाः ।
न प्रमदितन्यमीषद्धर्मादिति शास्ति ननु पुराणी वाक् ॥

853. धर्माचरणपरस्सन् मुक्तस्सन्नपि ऋणत्रयाद्राज्यम् ।
शासन् सुश्लोको भव परिगणनीयस्समानानाम् ॥

854. इत्युपदिश्य राज्येऽभिषेक्ष्यति कुमारं यामुनप्रभुः । तादृशो मदीय भक्त जन प्रभावः" इति निगदन्तमालोक्य रमा प्रस्तौत्येवम्—

855. दुग्धाम्भोधि महागृहोत्सुक, सुधान्धो बृन्द चूडामणी
रुग्धाराशबलीकृताङ्घ्रि युग, हे कारुण्यवारान्निधे ।
मज्जन्मन्दरवाह, सिन्धुरवरार्तिक्षेपिदोश्चक्र, हे
मुग्धालापरसाढ्य, हेकृतपलान्मूर्छस्वनोद्यद्दर ॥

856. करधृतदरारिभास्वर परिपालितनिखिललोकपाल पुनः ।
जनिताभिमन्युनन्दन शरणागत सेवधे दयाजलधे ॥

857. कुण्डलि द्विषदुग्रकेतन गोत्रभिद्द्रुमहारिदो
श्चण्डिमोत्पुलकी कृताङ्गकसत्य पाण्डवदौ त्यकृत् ।

सङ्ग राङ्गणजित्वरीकृत पाण्डवोग्रमहाधनु
र्दण्ड खण्डन पाटवाञ्चदुदारदार समागम ॥

౩ ౪. इति भागवत कथा श्रुति जनितानन्दातिरेकया रमया ।
आश्रितरक्षणपरया स तया रमते स्म परमया कृपया ॥

౩౬౭. श्रीनिवासाचार्य पौत्र शेषशर्मकृतो ह्ययम् ।
सर्गस्तुरीयोऽवसितो विष्णुपारम्यबोधक ॥

इति कुण्टिमद्दि श्रीनिवासाचार्यस्य पण्डितप्रकाण्डस्य पौत्रेण शेषशर्मणा संस्कृती कृते विष्णुचित्तीयमहाकाव्ये विष्णु-परत्वस्थापननामा तुरीयस्सर्गः ॥

-----:o:-----

राक्षसाब्दे श्रावणिके कृष्णषष्ठ्या गुरोर्पिने ।
पञ्चमोऽयमपक्रान्तस्सर्गो गोदाकथाञ्चितः ॥

# अथ सप्तमस्सर्ग

## सोमशर्मकथा

1. स ब्रह्मराक्षसः स्वपूर्वकथामेवं वदति–

2. चोलेषु कस्या च्चिदहं तु पुर्या
वसंश्च विद्या स्सकला अधीत्य ।
वादेऽजयं चाखिल शास्त्र वेत्तॄन्
श्रुतिस्मृति ज्ञानपि जल्पवाथी ।।

3. अनेन वर्तनेन प्रभिन्नगण्डो वेदण्ड इ मदेनान्धः,
अल्पयैव विद्यया रेड्डि कुलज इव, अल्पस्यापि
द्रविण्यस्य बन्धे मोक्षणे च न्यग्रः, तत्प्राप्तिमेव
ब्रह्माधिगमं मन्यमानः, स्पर्धमानश्च ज्ञान वयो वृद्धैः,
जितोऽपि समान इति, समानोऽ प्यजयमिति, अनृत
मुद्धोषयन्, अल्पप्रभून् सं भ्रामयन्, यज्ञदीक्षिता-
ना लोक्य अहमपि यियक्षुः, द्रव्यभिक्षार्थी
मधुरामगच्छाम । तत्त–

4 बहिष्कृत ब्रह्मकुलोद्भवानां
धनाशया निष्कृतिमीषदेव ।
विधाय भुक्त्वा सह तैस्सजग्ध्यां
दत्तानि वस्तूनि धनान्यगृह्णाम् ।।

5. गृहाणि गत्वा वणिजां पुरोधो
जनैश्शुभेष्वप्यशु भेषु युक्तः ।

पुण्याह कार्याणि विधाय तेभ्यो
बलादगृह्णां वसुतण्डुलानि ।।

6. लब्धं 1ग्रह् स्नान जपादिना यत्
विक्रीय पुण्यं धनिनां धनाय ।
प्रतिग्रह स्वाम्य मुपान होर्गो
कृत्तेरवाप्यार्द्रमृगा जिनस्य ।।

7. निमन्त्रितः पैतृकवासरेषु
शेषं नु वा तद्भवनेषु जग्ध्वा ।
कार्पण्य भुक्ती रथवार्ध कुक्षि
पुन स्तुलादानमपि प्रगृह्य ।।

8. तथार्जितं वित्तमहं कुपूय
कृत्यै विशः कस्यचिदाधयेऽ दाम् ।
दत्त्वा पुन. कृय्यपणस्य चाधेः
विवद्य तत्तो द्रविणं गृहीत्वा ।।

9. क्रीत्वोपानह युगल
प्लववाटयां, स्नेहमालिप्य ।
गोश्रेणी पत्ररसा
लेपनकृत्यैः प्रसज्जन्तम् ।।

10. वापितकूर्च स्सन्नु ष्णोदक विपणी मुपेत्य चाभ्यज्य ।
तैलेनोद्वर्तनकृत्या प्लावे चापि सज्जन्तम् ।।

1. उपराग = ग्रहण

11. दधिशाखादिक मोदन विक्रेत्रे प्रेषयन्त मत्यन्तम् ।
ताम्बूलीपल पूगैर्वीटी पेटींप्रपूरयन्तं च ।।

12 शिष्य परिवाह्य भस्त्री परिमित तण्डुल चयं च भार्या यै ।
क्रीत्वा सुचेलकान्यनुयुञ्जानं यानमपि च सह पथिकान् ।।

13. दृष्ट्वा मां च मदीय प्रयाण विषयान् विदश्य यः कश्चित् ।।
चोर: प्रेष्यात्मीयान् पूर्वं मार्गानुरोधाय ।।

14. स्वयमत्येकां भस्त्रीं गृह्णंश्च सहाध्वनीन इव रात्रौ ।
उत्थाय कदाचित् *"भोः त्वरयत यानाय"* चेति चाक्रोशन् ।।

15. तण्डुल भस्त्रीं वहता वटुनात्यैश्चापि मामटव्यासः ।
इत इत इति नीत्वाराद्वने चकूजोच्चकै स्वजनान् ।।

16. गोचर कर रेखे तत्समये कश्चिच्छरः पपाताग्रे ।
अभितोऽध्वनी नसङ्घे पश्यति वृष्टि पपात दृषदां च ।।

17. भीत्या बम्भ्रम्यमाणे पथिकसमुदये जन्तुराजी बुभुक्षा
प्रोद्यत्फालाक्षपार्श्वं प्रलय समयसङ्घूर्णित प्रेतभूतैः
तुल्या हालाहलाभायुधततिरुचि भी राहुसन्देह भीते
सप्ताश्वे धावमाने विसृमरदिविषद्वैरि जित्काननौको
चण्डालाः पान्थराजीः परित उपगता मारयेत्युच्चरन्तः ।।

18. एवं वृक्षेभ्यो लतानिकुञ्जेभ्यस्समेत्य समावृण्वतः आरोपितरोपान् विलोक्य कालायस प्रतीकाश विग्रहान् पश्यतोहरान् धावमानेषु पथिकसङ्घषु केचित्तेषाम्––

19. दुर्बला एता, न धावत, तिष्ठत, भो इति देवायुधान् क्षिपन्ति
प्रक्षिप्य काञ्चन ग्रन्थीन्निकुञ्जेषु धावमानाः पटान् सन्त्यजन्ति
अवरोप्य भारं गृहीत्वाऽसिमायासि कुत्र तिष्ठेति रुन्धन्ति हन्त

हन्त गृह्णीत चेलु,मिदं दैवतं, तस्य हानौ न नो भुक्ति, रिति वदन्ति ।

दापयामोऽस्मदीयवस्तूनि यात
मा स्पृशत योषितश्चेति दर्शयन्ति
स्वाभिमानं महत्त्व च साहसं च
सर्वमप्यर्पयित्वा स्वकं प्रयान्ति ।।

20. सज्यं परित्यज्य शस्त्र घातैं रपेतं तु सत्यापसन्यं प्रहृत्य
लुब्धे न यच्छति क्षतज परिस्राव्य लब्धमात्राणि चोरा हरन्ति
साहसोपेतमप यान्तं समूहात्तु नानुद्रवन्ति दृष्ट्वाप्युपेत्य
रिक्तहस्त बहि प्रेष्यांसल तु संमार्गितु वल्लीगृहान्तरेषु

लीनपान्थांस्तु कुन्तसङ्घट्टनेन
कुञ्जतो निर्गमय्य हृत्वाम्बराणि
पादरक्षात्वचः 1कानि परिमृशन्ति
शिष्ट कौपीन मात्रकां स्तांस्त्य जन्ति ।।

21. इत्थ विजृम्भितपाटच्चरेषु स्वैरमुच्चावच
पान्थस्वमोक्षणन्यग्रेषु-

22. आकटि चूचुकमाबद्ध्य दृढतर नीलीं धटी पुनरयतां च
मार्जालचुबुकाधिकश्मश्रुणा निजतुन्दगोले तु डोलायितेन
भूतिसञ्छन्नाननार्थ प्रसृत मेचक स्निग्धराजदुष्णीषकेण
असि पुत्रिकाकान्ति दिग्धकनिष्ठिका पर्वणा मामनुगच्छति स्म

1. सिरासि.

योहि मामपयान्त मालोक्य झटिति
चण्डचण्डाल तस्करस्य मनुधान्य
धावमानस्य मे ग्रहणाय याव
दागमत्स काकश्मश्रुनामकस्तु ॥

23. तावन्माणवकं विहाय सहसा सन्धावमाने मयि
द्रागास्यच्छुरिकां च मे निपतितस्योत्सूनतुन्दाद्बलात् ।
घट्या अंशुककर्षणे प्रतिघटन्मद्वित्तधि चाच्छिनत्
कर्णौ कुण्डलसङ्गतौ च धिगमुं शीर्षण्यकं चाहरत् ॥

24. वाग्दोषतोऽह न हि जोषमास
मगर्हयन्तं ननुरे वसंस्त्वम् ।
ग्रामे मदीयस्य तु सन्निकृष्टे
किं वाकरोः जीर्यति वा तवेदम् ?

25. पश्यानि गच्छेति च वादि नोमे[1]
पुनस्समागत्य स शस्त्रघातैः ।
भूयोऽवधीत् प्रद्रवता स्वकीय
जनेन सम्रान्तरधाच्च दस्युः ॥

26. ज्ञातैत द्विषयस्समीपसरणौ पश्चाच्चरन्नध्वगैः
स्यालो मे समुपेत्य मां मम गतिं चालोक्य दीनां वहन् ।
मद्धारं बत वीवधौ परिहसन् शृण्वन्नुदन्तं च मे
वाग्दोषात्स्वत एव दुस्स्थितिमिमां स्वस्यानयो हेत्यवक् ॥

1. अनादरे षष्टी

27. तस्कर मुषितव्याजादलीकहृत सम्पदोऽतिशयम् ।
उक्त्वा भुक्त्वा बान्धव वसतिषु कालं नयद्भिरपि पान्थैः ।।

28. चण्डालासिहतोः कराङ्गुलिचयैरागृह्य सूत्यै भिष
ङ्मार्गव्यग्रजनैश्च, दण्डहतिभि र्भग्नैः पटी भस्मभिः ।
छन्नैः कैः गृहिणोऽर्थिभिश्च तरगं, श्रुत्वा प्रदीनां स्थितिं
यच्छद्भिश्च पटच्चर प्रकटितैराशीर्वचोभिर्युतैः ।।

29. सङ्कीर्णाः पल्लीरप्यतीत्य मामत्र वीवधौ न्यस्य ।
जलपानायागान्मे स्यालो निरगुश्च मामकाः प्राणाः ।।

80. चोरभयेन धावमानस्य मम शरीरे शस्त्रघातैर्जनितस्य रोगस्य तापेन विवशस्य मम म्रियमाणस्य नयनयोः पुरतः स्थिते तस्यैव काकश्मश्रुणः करालरूपे, तादृक्षमेव राक्षसस्वरुपं मम समजनि । अतोऽहंयाचे भवन्त कैशिकीगानफलेन ममैतद्रूपमपनयेति ।

इति प्रार्थयमानं तमाह सुरियालुः, "परमेश्वर मुखोल्लासफलं विना गानस्यैतत्फलमिति नाहं जाने । आज्ञाकैङ्कर्यस्य अनुमतकैङ्करस्य फलपरिमाणगणना कुत्र ? प्रपन्नानां मुक्ति प्रतिबन्धकत्वात्फलस्य, अर्प्यमाणत्वाच्च भगवत एव, एतावदत्तदस्ति, तस्मिन्निद गृहाणेति वक्तु नाह सहे । त्वां भगवानेव रक्षति । मा भैषीः ।" वदत्येवं तस्मिन् राक्षसः शापान्मुक्तो बभूव ।

31. यज्ञसूत्रैः हिमपाण्डुरै स्स्निग्धत्रिभागमुण्डितशीर्षचूडया च तुलसी सरोजाक्षमालिकाभिर्लसद्द्वादशपुण्योर्ध्वपुण्ड्रकैश्च कौपीन-

कटिसूत्रकाषाययुगलेन जलपूर्णशुभकमण्डलुकरेण दिव्यप्रबन्ध-बन्धुरपञ्चशाखेन पश्चा[1]र्धवावपूर्व भाषणेन ।

ब्रह्मवर्चसशोभि भागवत सम्प
दतिशयितहाटक प्रभया रराज
धूमपटली विनिर्गतहव्यवहन
हेतिरिव वैष्णवीभूय दानवोऽपि ॥

४३. एव भागवत परिचय प्रभावेन स्रस्त लवण द्विगुणितमिव न केवलं ब्राह्मण्य भागवत सम्पदमपि प्राप्य परमहर्षभरितः स्वरूपानुरूपा तस्य पूजा विधाय—

४४. जय दुरुत्तरणसंसरणाब्जदलनीर जय जय गायकसार्वभौम
जय शौरिगाथारसज्ञ पुण्यरसज्ञ जय जय तत्त्वसशय लवित्र
जय जनार्वाचीन जनि सङ्ग वञ्चक जय जय देशिक चरण शरण
जय प्रोक्तवाक्प्रतिष्ठा तृणीकृतदेह जय जय भगवदाज्ञाकृतिस्थ

जय सकलजन्तु समचित्त जय दयार्द्र
जय मुकुन्दान्य देवता शास्त्र बधिर
जय चतुर्द्वय भक्ति लक्षणचिताङ्ग
जय मुरारि प्रपन्नाङ्घ्रि जलजमधुप ! ॥

34. एवं प्रस्तुत्य त प्रदक्षिणी कृत्य पुनर्भवभयेन भवन भार्या प्रमुख सुख विमुखः बदरीवनादि पुरुषोत्तमाधिष्ठित पुण्यभूमिषु पौनः पुन्यं तीर्थयात्रामाचरन् परमा निर्वृतिमाप ।

---

1. द्वयमन्त्र उत्तरार्ध ।

एतां पुण्यकथां वहनसमये वराहरूपिणा नारायणेन श्रुत्वा मही महिला मही महिला मदीय पूजोपचारेषु विशेषफलदं गानमेवेति स्वयं वैष्णवीगानाकलनकुतूहलेन तव पुत्री भवन्ती अहरर्हवि प्रलम्भ दम्भेरितागाधगाथार्थं समेतगीतरसेन काल-हरणमेव न त्वन्यत् । किमपि तपस्तपतीत्यवादीः । किमन्यदस्ति तपोऽस्मात् ।

सर्वं सुसम्पन्न भविष्यति । श्रीरङ्गनाथसेवायै रङ्गपुरं नयैनामिति ।

तद्वचनमाकर्ण्य स विष्णुचित्त. ––

## श्रीरङ्गनाथदर्शनम्

महान्प्रसाद इति प्रणम्य गत्वा काञ्चन पल्लक्यां ता
बालामणिमुपवेश्य परिचारिकाशतेन भागवतपरिषदा च ।
अनुगम्यमानः कतिपयप्रयाणैः परमानुरागेण गत्वा,

85. सोऽपश्यद्विरजाभिधान्तरवपुस्सह्योद्भवा निम्नगा
तीरस्थावनिजातसञ्चयदलान्तर्दृश्यमानं महत् ।
पापालिप्रविभङ्ग चम्पक सुमत्सौवर्ण सप्तावृति
त्विड्व्योमस्पृशशृङ्गदीपकलिक श्रीरङ्गपुण्यस्थलम् ॥

86. चोलीहल्लकचितकचपालीसौगन्ध्यगन्धिलो वायुः ।
तस्य नुनोद ग्लानि वीणायितभृङ्गमदमराली निननैः ॥

87. स्नात्वाघमर्षणैस्तत्कावेरीवारिवैष्णवैस्सहितः ।
कृतमाध्याह्निककृत्यः स्नातालङ्कृतकुमारिकां नीत्वा ॥

38. श्रुतपादमञ्जीरशिञ्जितादन्तिभ्य इव सुन्दरीभ्यः पराङ्मुखन्ति
दत्तमुष्टिमणी गृहस्थनीराजनद्बा.पार्श्वरत्नेषु निक्षिपन्ति
श्वासान् रमेशनैवेद्यगन्धादिव सूनपरीमलान्नियमयन्ति
कीरवाणीरिवगीतशौरिस्तुतीस्सामिसमाधिनिशामयन्ति
वलभिरत्नांशुभिस्सितात्मवसनेषु
चित्रवर्णेषु सत्वरनिर्गमेण
अर्थयन्ते च ये धान्यमेव वीत
रागकैस्तत्सितद्वीपित विवेश ।।

39. आगतविष्णुचित्तमनिलश्शशिपुष्करिणीकशीकरै
स्तापहरो विमानमणिकिङ्किणिकारुतिमञ्जुभाषणे. ।
गोपुरकन्दरास्वनुयुयोज सुखागमन विवेश, सोऽ
काण्डविशन्मरुद्गणनिवारक च ण्ड सनाथगोपुरम् ।।

40. ईषन्नम्रशरीरदन्तिवदनानीके द्वयोः पार्श्वयोः
आज्ञानिर्वहणातुरे सति मणी वेद्या कुथ तिष्ठते ।
अङ्गुल्या हरि मुद्रिकां करतले वेत्रं च सबिभ्रते
सेनेशाय नमश्चकार स च सम्मेने च भक्तं हरेः ।।

41. अविदितपुरन्दरायुधकनकाचलकल्पमण्डजाधीशम् ।
पक्षद्युतिभिर्बाला तप किरन्तं त्रयीमयात्मानम् ।।

42. प्रणम्य विनतापुत्र तेन स्वस्य समागतिम् ।
विज्ञापनं कारयित्वा रङ्गनाथस्य सन्निधौ ।।

43. लब्ध्वा चानुमति तस्य प्राविशत्सहचारिभिः ।
पूतं ततं सञ्ज[1]वनं ददर्श च सभागतान् ।।

1. सभा

44. नीलनीरदतुल्याभान् शतपत्र विलोचनान् ।
चपलापिङ्गवसनान् प्रालम्बिवनमालिकान् ।।

45. मधुवैरिप्रतीकाशान् परिपार्श्वनिवासिनः ।
पराङ्कुशमुखान् मुक्तान् स्वामिसेवा समागतान् ।।

46. दृष्ट्वा प्रणम्य तैश्चाभिनन्दितोऽन्तर्विवेश हा ।
प्रत्युप्तकान्तिमद्रत्नहाटकस्तम्भ शोभितम् ।।

47. चित्रनेत्र वितानेभ्यो लम्बमानैस्समुज्ज्वलैः ।
मुक्तागुच्छप्रसून स्रक्चामरै स्समलङ्कृतम् ।।

48. कालागरु सुगन्धाढ्य धूपसंधूमितान्तरम् ।
शातकुम्भमयैः कुम्भै राजितैश्शिखरैर्युतम् ।।

49. नेत्रपर्वीबभूवास्य विमानं तत्र विस्तृतम् ।
तस्य मध्ये निशाकान्त कान्तवेदीस्थलेऽमले ।।

50. चरणाद्यङ्गाधिष्ठित धर्माधिक सूरि समुदयाभिन्ने ।
तेजोमये च विपुले विमले पीठे च मञ्जुले ललितम् ।।

51. निर्हारिगन्धलोलुप लोलम्बकुलाकुलं कमलम् ।
स ददर्श तत्र कमले सुवर्ण वर्णोत्तमर्णितां कान्तात् ।।

52. मृदुकर्णिकां च तस्या क्षीरार्णवहेतुभूतमिव चाद्यम् ।
तन्मात्रमिव च, पारद पटीर धवलाब्ज तुहिनकिरणानाम् ।।

53. लज्जाकरया कान्त्या विराजमानं समीरभुग्राजम् ।
तद्वाताशनपाण्डुरभोगाभोग परभागमस्यैव ।।

54. उपबर्हायितभोगे महार्हकेयूररत्नकिम्मीरम् ।
विन्यस्य कूर्पर स्वकमान्तररागं समाधिमग्नानाम् ।।

55. सम्मार्जनेन नितरा मिवारुणे करतले निधाय हनुम् ।
कञ्चुकित नान्दनागमसुमकञ्चु[1]किकञ्चुकात्मकनिचोले ।।

56. पार्श्वतले तु शयालुं; कुञ्जरबाधाकरो नक्रः ।
चक्रच्छिन्नो गत इव सायुज्यं यस्य कुण्डलीभूतः ।।

57. मणिमकरकुण्डलाभा द्विगुणितसौन्दर्यमधुरमकरन्दम् ।
यस्य वदनारविन्दं विभात्यपि निमेषशून्यनयनाभ्याम् ।।

58. दर्शनसमये नीलश्वेतामपयर्थ निमिषद्भ्याम् ।
कलधौत गौरगौरां निजमूर्ति दर्शयति यश्च ।।

59. साकृति निराकृतित्वे द्रष्टुमशक्ये इव प्रपन्नानाम् ।
श्यामा[2]च्छायाभ्यामिव विनीलता दीर्घताभ्यां यः ।

60. युक्ताभ्यां रात्रि दिवाकरात्मकाभ्यां विलोकयन् दृग्भ्याम् ।
विकसितकैरवहल्लकदलपुञ्जान् सिञ्चतीव सर्वत्र ।।

61. अरुणाधरकैतव मुख जात ज्वलनेन सहचरं पवनम् ।
सङ्क्रमयन्त्येव मनागुन्नतया तिलकपुष्प तुल्यनसा ।।

62. दृष्ट्वा याभिसिताब्जं महदाश्रितपूर्णिमाशशाङ्क इति ।
शमय विरोधमिति रमां मुकुन्दपदसंवहनकृते निरताम् ।।

63. सोमसमानोदर्या मणिहेम प्रभृतिकं [1]करं ददता ।
तमसेव कटकमणिमयकेयूरादिक यतेन च भजेन ।।

1. फणी, 2. सूर्यथार्ये

64. कटितल घटिते, नोरस्स्थलदीब्यत्कौस्तुभ प्रभापटले ।
पूर्णा परिषदमध्यारूढायाः पुण्डरीक निलयायाः ॥

65. देह प्रभयेवात्यवदात श्रीवत्सलाञ्छनेनापि ।
विजितमृगनाभिनाभी सुगन्ध सम्पाति षट्पदाल्येव ॥

66. श्यामलपेशल तुलसीमालिकया चाचि पावनया ।
असुरासुग्रहणोन्मुखकपट हरीभूय भूयोऽपि ॥

67. नरवेषग्रहणे विस्मृतमिव शून्येन मध्येनमणे. ।
घनजघनचरमगिरितट राजत्काञ्चीस्थ तरलगगनमणेः ॥

68. प्राभातिकभापूरेणेव च पीताम्बरेण दीप्तेन ।
स्निग्धान्तरलावण्येनाम्बरदृश्येव सक्थियुगलेन ॥

69. आमीलित नीलिम्ना वैदूर्य स्तम्भयुग्म सदृशेन ।
त्रैविक्रमरुपेणोद्धृतेन वेगेन चरणेन ॥

70. सक्तमणिहेममयसुरसालतुलाकोटिभासमानेन ।
अङ्गदमणि का न्तिरुचिरपार्ष्णिमनोज्ञेन ॥

71. भावि निजकमठमूर्ति स्फोरककच्छपनिराकरणपटुना ।
कोकनदमृदुतललाभ्यां तारारुचिनखर चन्द्रिकापूरैः ॥

72. लक्ष्मीकुचयुगकुङ्कुमपङ्काकलनेन शोणशोणाभ्याम् ।
मकराङ्कुशकलशकमल कुलिशध्वजभव्यचिह्नरुचिराभ्याम् ॥

1. उपायनं

73. तापत्रियहराभ्यां भक्तौघ तमोनिवःरण पटुभ्याम् ।
शरणागतजनमुक्ति प्रदायकाभ्यां च चरणकमलाभ्याम् ।।

74. देदीप्यमानं पुरुषोत्तमं तं
नारायणं शङ्करपद्मजाद्यैः ।
स्तुत्यं हृषीकेशमनङ्गतातं
श्रीरङ्गनाथं कमलासहायम्

75. सहागतै र्भागवतैः कुमार्या
स विष्णुचित्तस्सहितः प्रणम्य ।
महीतलालिङ्कित सर्वगात्र
नुनाव [1]गोधिग्रथिनाञ्जलिस्सन् ।।

76. विरिञ्चिनित्य पूजना विधानतुष्टमानस
प्रथा रान्ववाय भूमिनाथगेह दैवत
धनाधिपानुजन्मवंशदेवते रमापते
नमामि चन्द्रचूडमुख्य निर्जरालिवन्दित ।।

77. अनन्त सर्वेश्वर सर्वकात्मन्
अगोचराभेद्य महन्महीयन् ।
अणोरणीयन् सकलस्य धर्तः
सत्य भवन्तं प्रणमामि नित्यम् ।।

78. भूमी प्रभृतिकगुरुतर
वस्तुभ्यश्चापि गुरुतरं शरणम् ।

---

1. ललाटे

करवाणि त्वां परमात्
परमं नारायणं नुनूषामि ।।

79. आविधिशङ्करशतमख
माच क्रिमिकीटमखिलमपि विश्वम् ।
यत्र प्रभवति विचलति
लयमेति च तन्नमामि सकलमयम् ।।

80. क्षरांक्षरांभ्यां परमं यमादि
निष्ठागरिष्ठात्मक भात्यमानम् ।
सत्त्वादि संसर्ग विहीनमच्छ
मनाद्यनन्तं प्रणमामि नित्यम् ।।

81. आकाष्ठमायुगञ्चापि काल सूत्र स्वरूपिणी ।
नयच्छक्तिहृषीकाणां गोचरा त्वां समाश्रये ।।

82. इति परस्वरूप सुरसेव्य भव्य दिव्यावतार विलासान् स्तुवन्तं तं मुनि कौस्तुभाभरणः करुणातरङ्गितापाङ्गै रालोक्य अनुयुज्य कुशलं, अङ्कुरितकङ्कणालङ्कार केङ्कारं पदपङ्कजयो-स्सुमाञ्जलिमर्पयन्त्याः सकल सीमन्तिनीसीमन्त मुक्तामणेः आमुक्तमाल्यदायाः रूपयौवन लावण्यानि निरीक्ष्य साकूत, मात्मन्येवम चिन्तयत्–

83. एतछ फरलोचनादृगुन्मेषेण केतनाप्ति स्समितिमन्मथस्य
चै[1]त्रिकस्य प्रतिष्ठैतदणुमध्यमा मध्यवल्ली समुत्कम्पनेन
रतितत रागस्य मधुरतैतद्धैमकुम्भस्तनीस्तन जृम्भणेन
भारती हंसी कुलायाप्तिरेतदब्जानना वदनस्य विलसनेन

1. वसन्तस्य

पोषितमयूर लास्य वैदग्ध्यमेत
दम्बुदकचीकचोल्लासवैभवेन

तृषितमधुलिट्सपी[1]तिरप्येतदीय
मृदुलचरणाब्जयुग समुन्मेषणेन ।।

84. इत्थं विचिन्त्य रमणी तनुमोहितस्सन्
अन्तः पुरीमुपनयन् सुतनुं तदीये ।
स्थाने च कल्पितवधूं विदधे स रङ्ग-
भर्ता द्विजस्स्वतनयेति च मन्यमानः ।।

85. अर्चकमुखेन भगवदनुगृहीतानि तीर्थप्रसाद परिवेष्टनानि गृहीत्वा देवालयान्निर्गत्य मायादुहितरं पल्लक्यामुपवेश्य स्वावासमेत्य आन्दोलिकायां कन्सा मपश्यन्नान्दोलितमनाः—रङ्गपति समीपं गत्व,

86. अब्रह्मण्य, मसौ हरिर्मम सुतां-अन्याय्यमेतत्—जहा
राब्रह्मादिपिपीलिकन्नियमयन् प्रभ्वीभवन् साम्प्रतम् ।
ब्रह्मस्वाहरणं किमेतदयि मां पश्यन्तु रङ्गेशितु
दौर्मार्ग्य च वदन्तु यूयमिति निर्यद्बाष्परुद्धस्वनः ।।

87. काङ्क्षा स्याद्यदि मामकीन तनयोद्वाहे, न दास्यामि किं ?
देहप्राणनिशान्त सन्तति पशुव्रातश्च सस्यन्धनम् ।
तस्मै तत्स्वजनार्चनाय हि[2]समं, मत्कार्जितं; कन्यका
चेयन्ते कियती रमेश ! लभसे किं त्वं लघूकृत्य माम् ।।

1. सहपान 2. सर्व.

88. ब्रह्मेशेन्द्रमुखा न शासितुमलं त्वां, त्वन्नियोज्या हि ते,
स्थाने किं हरणं ? निरङ्कुश इति त्यक्त्वानयं; तावकम् ।
सर्वं स्थावरजङ्गमं भवतु; मन्माता दयाम्भोनिधिः
पार्श्वे मह्यमियं, च भक्तजनता जागर्ति हे केशव ।।

89. किं ब्रवीमि मुकुन्द ! भूमिललना लक्ष्मीश्च नीलासती
दारास्सन्ति तथापि तावकमनो मुग्धामिमां काङ्क्षते ।
किं वा मत्परिहास पात्र करणादन्यत्तु ते विद्यते ?
कौटिल्यं सरितां, जलस्य पदवी संस्कर्तुमीष्टे नु कः ।।

90. इति धरणीसुरवरे क्रोशसि भागवतक्षोभाद्भुवन भर्तापि क्षुभितः तस्य छान्दस परिहसन्निव स्मितविराजमान मकर-कुण्डलमण्डितगण्डस्थलः एवमुवाच—

91. वार्धक्याच्च परायते तव मतिः कन्यां गृहे स्थापयन्
हे वाचंयमवर्य ! बाह्यभुवि मान्दोदूष्यसे त्वद्गृहे ।
भूयस्तां प्रसमीक्ष्य लोलनयना सा तत्र नो चेत्तदा
युद्धचस्वात्र न दर्शयात्म मतिविभ्रान्ति व्रजालोकय ।।

92. एवं मुक्तो जगादैव दुःखं वेद्मि न किञ्चन ।
हृदयाह्लादिवचनमवोचः कृपया मयि ।।

93. विजयीभवेति गत्वा सत्वरं मुनिपुङ्गवः ।
प्रणतां तनयां मूर्ध्नि जिघ्रन्मोदाश्रुलोचनः ।।

94. हस्तेनामृश्य तां कन्यां लालयन्नवसद्गृहे ।
ततो रङ्गपतिर्ब्रह्मरुद्रौ ब्राह्मी च पार्वतीम् ।।

95. विप्रेष याचितुं कन्यां सेनानी सहितांस्तु तान् ।
आगतान्विस्मया विष्टो विष्णुचित्तस्ससम्भ्रमम् ।।

९६. विलोक्य दत्वा चातिथ्यं विष्वक्सेन पुरस्सरम् ।
उचितासन आसीनान्पप्रच्छागति कारणम् ।।

97. रङ्गनाथप्रेषणेन कन्यावरणकारणात् ।
आगता इति संश्रुत्य मोदतुन्दिलमानस. ।।

९8. धन्योऽहं तनयां द त्वा भृगोः क्षीरार्णवस्य च ।
यास्यामि गौरवं चैतत्सेनानी विधिशङ्कराः ।।

९9. किञ्चैतच्छ्ृणुतानीय लक्ष्मीवानिति कन्यकाम् ।
प्रादाहिति जना ह्रीना वदेयुस्तेन मत्पुरीम् ।।

100. आगच्छन्तु महाभागास्सत्यं दास्यामि कन्यकाम् ।
नारायणाय दारार्थे कनकाभरणैर्युताम् ।।

101. सर्वदेवाधिदेवोऽपि वाल्लभ्यं तस्य सन्निधौ ।
अस्त्येव हि प्रपन्नानां त्वादृशां च विशेषतः ।।

102. दद्त्तभूमिकां धृत्वा तदिच्छामनुसृत्य ताम् ।
एतद्गौरवमस्माकं, तद्दानं तस्य गौरवम् ।।

103. तस्य तद्वचन तेभ्यः श्रुत्वा विश्वम्भराधिप. ।
दयार्द्र चित्तो निगम स्वरूपं विनतासुतम् ।।

104. औपवाह्यं समारूढो ब्रह्मेशमघवादिभिः ।
तत्तद्यान समारूढै र्निर्जरैः परिवेष्टितः ।।

105. ना सीरगवेश्रवता व्यूढानां व्योम्नि [2]जन्यविसराणाम् ।
शतकोटि भानुभासुर भूषाशतकोटि भानुभिश्शबले ।।

---

1. सेनामुखे 2. वरस्य स्निग्धाः

106. श्रीधन्विनव्यपुरमेत्य विश्वकर्मणा निर्मितं
मणिमयभवनं प्रविश्य स आदिमवर तल्लजः
दिव्याप्सरोभिः हारिद्रादिक स्नानीयमङ्गलद्रव्यै-
रलङ्कृतः विवाहनैपथ्य परिष्कृतः दिव्यवादित्रैः
नारदादि दिव्यमुनिगानानां मङ्गलनादेषु प्रचलितेषु
कलधौत धवल दिव्य धारा धरवान्तसुधाधाराभिषिक्तः
आबद्धपीताम्बरः मुक्तावली कौस्तुभामुक्तकन्धरः
केयूरकङ्कणालङ्कृतः मकरकुण्डल मकुटादि भूषा विभूषितः
दिव्याङ्गरागरूषितः तुलसी कल्पतरुप्रसवस्त्रगाश्रितोरस्कः
सम्बभूव ।

ततः तत्र पूर्वमेव स्वगृहं प्रविष्टः सम्भ्रमायत्त चित्तस्स विष्णुचित्तः प्रयत्नेन–

## श्रीगोदापरिणयः

107. शर्वाणी वाणी मुखगीर्वाणीभिस्सुगीयमानेषु ।
उर्वीतनयाराघवशर्मद कल्याण विभवगानेषु ।।

108. एकावल्यादिसखीचामर सवीज्यमानकन्यां ताम् ।
ऋषिदारा हारिद्रद्रवेण लिलिपु सुमङ्गलाशीर्भि. ।।

109 वैवाहिकदीक्षायुतकुमारिका गन्धतैलपरिषिक्ताम् ।
स्वर्णमणिकुम्भ हिमजलपूरैरभिषिच्य सूक्ष्मवसनेन ।।

110. आमृज्य केशपाश मणिपीठे तान्निवेश्य तत्कबरीम् ।
धूपेन धूपितामाबबन्ध धम्मिल्लमेणदृक्काचित् ।

111. अरुणचरणनखपङ्क्तीरनुरञ्जयति स्म यावकरसेन ।
काचित् काचित्पादाभरणैश्चालञ्चकार पच्छाखाः ।।

112. एकाधारयदनया हैमदशाभासुरं सित क्षौमम् ।
काचित्काञ्चनरसनामुक्ताहारैरलञ्चकार च ताम् ।।

113. कटकाङ्गदाङ्गुलीयक नासासीमन्तमणिभिरपि काचित् ।
ताटङ्काभ्यामपि तामलञ्चकारेन्दु बिम्ब निभवदनाम् ।।

114. काचित्कज्जलरेखां सितनयनयुगे ललामक निटले ।
अङ्गे सारङ्गमद युयोज कुसुमस्रज च धम्मिल्ले ।।

115. इत्थं तस्यामलङ्कृतायामावेदित मुहूर्त सान्निध्यः स पन्नगशयनः द्वादशमार्ताण्ड मण्डलेषु करदीपिकायमानेषु सहस्र-पत्र सपत्ने आतपत्रायमाणे सिन्धुपतौ सुगन्धकोपहार सहित गोमुखेन विपणिवीथीं रञ्जयति, प्रकृतिकान्तायां सह सुरनित-म्बिनीभिः प्रान्तसमीकरण समारब्धाया, हुतवहेऽगरुधूपमुत्क्षिपति, वितानं वहति पर्जन्ये, प्रशसापाठपठनवन्दिमागधाय मानासु त्रयीषु नारद सनन्दनादिषु सङ्गीतमाङ्गल्येन अन्तरङ्गमानन्द तुन्दिलयत्सु, विहङ्गमपुङ्गवे मणिखचित कल्याण पल्याणमङ्गी-कृत्य मतङ्गजायमाने अप्राकृतवैभवेन गत्वा, परमसम्भ्रमेण भागवतपुङ्गवे सभक्ति प्रणाममभ्यागच्छति अवतीर्य वाहनात्ः आलम्ब्य विष्वक्सेनकरं कक्ष्यान्तरेषु चञ्चलाक्षीधाव्यमान पादोदक अहंपूर्विकमायतद्गीर्वाण सिद्धसङ्घेषु निर्वारीकृत भूतलं परिगृह्य प्राशनतत्परेषु, तेन निर्दिष्टे जाम्बूनदपीठे उपविश्य पुनस्तेन भागवतेन गाङ्गेय भृङ्गारुक जलैः कनक भाजन निहित कुशेशय पेशल पद किसलय युगे परिधाव्य षोड-शोपचार पूर्वकं दीयमान स्वीकृत्य सपरि ष्क्रियं मधुपर्क तद्भक्त-वरेण सदारेण सादरं समर्प्यमाणां कन्यामतल्लिका परिजग्राह ।

116. सौवर्णद्रवचित्रितां विमलमुक्तास्यूत नीलाञ्चलां
लग्ने सन्निहितेऽमरा यवनिकां प्रह्वामकार्षुः क्रमात् ।
अन्योन्येक्षण सम्भ्रमच्चटुलदृग्जालौ गुडं जीरकं
चान्योन्यस्य वधूवरौ करतलेऽधत्तां सरोजोपमे ॥

117. न्यस्यन्त्या विभुमस्तके बिमलमुक्तातोममस्याः कर-
स्पर्शादुद्गत धर्मबिन्दु निचया मुक्ता मुरारे स्तनोः ।
पेतुर्वाषुकनीरदाज्जलकणास्स्वच्छाश्च वर्षोपला
गोत्रायामिव चातकत्स्वजनदृक्सम्मोद सन्धायकाः ॥

118. मुक्ताञ्जलिमाधातु गोदासावुत्क्षिपद्भुजद्वन्द्वा ।
अकिरत्केवल मुक्ताः दृष्ट्वा कुचकुम्भपतितहरिदृष्टिम् ।

119. तस्याः कण्ठे मङ्गलसूत्रं निबबन्ध जातरोमाञ्चे ।
गात्रे कङ्कणमपि तौ परस्परं हस्तयोरबध्नीताम् ॥

120. लाजैर्हुत्वा हरिस्सप्तपदीं चाकारयत्तया ।
अरुन्धती तया साकं ददर्शानर्च सादरम् ॥

121. जग्राह विधिरुद्रादि समर्पितमुपायनम् ।
कृत्वानुग्रहपात्राणि गृहानगमयच्च तान् ॥

122. नवोढया तया साकं हरिस्सन्तुष्टमानसः ।
ययौ पुरी निजां रम्यां सह्यजापरिवेष्टिताम् ॥

123. तत्तटोद्यानकुञ्जेषु चन्दनद्रुमवाटिषु ।
नीलकुन्तलया साकं मारसाम्राज्यवैभवम् ॥

124. भुञ्जन् लोकानवन् सर्वान् करुणावरुणालयः ।
अद्यापि च वरीवर्ति फणिराड्भोगतल्पके ॥

## इति सप्तमस्सर्गः

125. आमुक्तमाल्यदाभिधमनूदितं संस्कृते महाकाव्यम् ।
वसितं समस्तमेतत् राक्षसवर्षाश्विने मासि ।।

126. बहुलतृतीयघस्ते गीष्पतिवारे च चान्द्रमानेन ।
निरवधि करुणालहरीतरङ्गितापाङ्ग वाजिमुखकृपया ।।

127. अरचयदेतत्काव्यं हयवदनश्शेषशर्माणम् ।
श्री श्रीनिवासपौत्रं निमित्तमात्रं विधाय सर्वं स्वम् ।।

128. सुखिनो भवन्तु सर्वे भूयासु र्धार्मिका स्सजिवाः ।
वसुन्धरा स्यात्सुफला माधवभक्ता भवन्तु पञ्चजनाः ।।



| पुटी | पंक्ति: | असाधु | साधु |
| --- | --- | --- | --- |
| 3 | 5 | कते | कृते |
| | 6 | भाभिन्य: | भामिन्य: |
| | 18 | यन्दित | यन्त्रित |
| 4 | 13 | रलोचिता | रत्नोचिता |
| | 17 | इदानी | इदानी |
| | 20 | न त्कचा बक्रा: | तत्कचावक्रा: |
| 5 | 6 | स्त्र | घस्त्र |
| | 9 | कर्तुं | कर्तु: |
| | 14 | वत | वत्र |
| | 16 | श्रिय: | श्रियं |
| | 20 | द्यन | द्यत |
| 6 | 10 | मुजौ | भुजौ |
| | 10 | ह्राश्श्च | ह्राञ्चित |
| | 13 | दीत्पौ | दीप्तौ |
| | 18 | चिक्षिपनु | चिक्षिपतु |
| | 21 | मा | भा |
| | 22 | शारेन्द्र | शातेन्द्र |
| 7 | 8 | पट्टि | पट्टी |
| | 14 | कट्योयित | कट्यायिता |
| | 15 | सूचपिता | चुचयिता |
| | 16 | हंससापादम् | हंसपादं |
| | 17 | कद्गलआग्रा | कदलिराग्रा |

| पुटी | पंक्ति: | असाधु | साधु |
|---|---|---|---|
| 8 | 3 | जङ्गा | जङ्घा |
| | 11 | पष्ट | पृष्ट |
| 10 | 4 | तलैव | तत्रैव |
| | 5 | च्छन्नेकधा | च्छन्नैकधा |
| | 6 | त्वङ्गीत | त्वद्गीत |
| | 6 | प्रेम्णावा | प्रेम्णाऽव |
| | 8 | भवकनं | भवनं |
| 11 | 11 | देश्शकत्या | दोश्शकत्या |
| 12 | 11 | वल्ल | वल्लव |
| | 20 | सभा: | समा: |
| 13 | 1 | नोहृदये | नोदे |
| | 17 | स्याद्र्हणं | स्यद्गर्हणं |
| | 21 | दीर्घा | दीर्घो |
| 14 | 10 | नार्ति | नार्ति |
| | 14 | यह्व | मह्व |
| 15 | 2 | तम | सम |
| | 16 | च्छवश्रो: | च्छ्वश्रो: |
| 16 | 8 | अधि | आधि |
| 17 | 17 | जरादु | जगदु |
| | 21 | त्यक्तवैनां | त्यक्त्वैनां |
| 18 | 10 | येत्तुं | भेत्तु |
| 19 | 18 | कृष्ण | कुष्ट |
| 20 | 7 | ङ्घ्रि | ङ्घ्रि |

| पुटी | पंक्ति: | असाधु | साधु |
|---|---|---|---|
| 22 | 18 | पल्सव | पल्लव |
| 27 | 1 | कान्त | कानन |
| | 5 | न्याज | व्याजा |
| 28 | 18 | च्छवासैः | च्छ्वासैः |
| 29 | 5 | आक्रम्य च | आक्रम्य विक्रम्य च |
| | 7 | नियतित | निपतित |
| | 10 | पराह्व | पराह्ण |
| | 13 | त्याद्रि | त्यद्रि |
| 30 | 8 | धनायस | घनायस |
| | 9 | रन्यां | रत्यां |
| | 10 | मक्त | मुक्त |
| | 21 | कभन | कमन |
| 32 | 9 | ङ्गेक्षण | ङ्गेक्षण |
| 33 | 11 | आति | आर्ति |
| | 22 | कदीय | मदीय |
| 37 | 4 | तू | तु |
| | 5 | नीदूरङ्वा | नीदूरमुवास |
| 38 | 9 | साष्टाग | साष्टांगं |
| | 21 | सत | रुत |
| 39 | 9 | षथा | व्यथा |
| | 10 | वापि | वापी |
| 41 | 12 | रक्ताक्र | रक्तावत |
| | 23 | रावे | मूत्ते |
| 42 | 8 | तिष्ठान | तिष्ठन् |

| पुटी | पंक्ति: | असाधु | साधु |
|---|---|---|---|
| | 10 | वञ्चयित्व | वञ्चयित्वा |
| 43 | 12 | निर्दये | निर्दयं |
| | 21 | पपेन | पणेन |
| | 22 | क्रय | क्रय: |
| 44 | 1 | अज्ञानेन भाव्य | अज्ञानेन भाव्यम् |
| | 5 | भवत् | भवेत् |
| | 15 | पतङ्गा दीना | पतङ्गादीनां |
| | 25 | चेतू | चेत् |
| 45 | 6 | अमुल | अमुत्र |
| | 13 | युष्मद्भयो | युष्मद्भ्यो |
| 46 | 9 | शंम्साविना | शंसांविना |
| | 23 | तद्भृत | तद्व्रतं |
| 47 | 1 | द्भ | द्व्र |
| | 8 | निस्स्पृहा | निस्स्पृहा |
| | 14 | कर्णे | कर्णौ |
| 48 | 4 | यन्यमुनि | यत्यमुनि |
| 49 | 1 | मालिङ्गय | मालिङ्ग्य |
| 50 | 2 | गागच्छे | नागच्छे |
| | 6 | त्स्याने | त्स्थाने |
| | 19 | कम्भ | कुम्भ |
| 51 | 12 | मज्ञक | मशक |
| | 20 | नाभवा | नाभवाम |
| 52 | 1 | वाक्य | वाक्च |
| 57 | 3 | धारिका | दादिका |

| पुटी | पंक्ति: | असाधु | साधु |
|---|---|---|---|
| | 4 | पंडितो: | पंडिता: |
| | 5 | चतुरस | चतुरस्र |
| | 7 | दानारं | धानांतरं |
| | 8 | सुत्तार्थ | सूत्रार्थ |
| | 13 | अनुध | अनूद्य |
| | 14 | प्रागलभ्य | प्रागलभ्यं |
| | 20 | नंहितु | नंदितु |
| 61 | 7 | नगरी | नगरी चकास्ति |
| | 14 | तीर्थैश्च नागाभिषिक्त | करिवरै रभि षिच्यमान |
| 62 | 2 | पथ | पथा |
| 63 | 5 | नीद्गमति नतिथि | नोद्गतिनति भिश्च |
| 73 | 16 | ख | रव |
| 74 | 18 | धजल | धवल |
| 75 | 14 | विट | विटं |
| 76 | 22 | ह्वसन्त | ह्वयन्त |
| 80 | 20 | रित्यँ | नित्यं |
| 81 | 11 | मिनति | मिलति |
| 82 | 13 | दू | द्रु |
| 84 | 11 | क्षेत्र | भूमि |
| | 17 | आदो | आदौ |
| | 17 | मत्स्यान | मत्स्यान् |
| | 18 | वब | वन |
| 85 | 4 | बल्ली | बल्ली |
| | 10 | कान्ताड | कान्ता |
| | 19 | इत्य | इत्थ |

| पुटी | पंक्ति: | असाधु | साधु |
|---|---|---|---|
| 86 | 1 | भेहा अस्तिकेऽ म्बेति चातप | मस्तिकेऽम्बेति चाप्यातप |
| | 14 | धन | घन |
| | 16 | च्छवासा | च्छ्वासो |
| | 16 | स्वास्वां | स्वास्व |
| | 18 | हृंदथ | हृदय |
| | 20 | वाक्यानुर्य | वाक्‌चातुर्य |
| 87 | 9 | प्रसूत | प्रसून |
| 88 | 10 | सभीप | समीप |
| | 13 | तदबनिप | तदवनिप |
| 89 | 13 | पाणिस्य | पाणिस्थ |
| 91 | 7 | तल | तत्र |
| | 8 | यन्तें | यन्तं |
| | 11 | धन | घन |
| 92 | 2 | नहामि | वहामि |
| | 20 | मुग्द | मुद्ग |
| 93 | 10 | स्तिषषापते | स्त्वषापते |
| | 12 | दान | दात्र |
| 94 | 7 | किमिद | किमिदं |
| | 19 | शने | शनै |
| 98 | 2 | क्षररस्थन् | क्षरस्स्यात् |
| | 6 | चंकं | चैंकं |
| 100 | 13 | खाण्डिश्य | खाण्डिक्य |
| | 13 | बिन्दुं | विन्दुं |
| 102 | 14 | ज्युत | च्युत |
| 105 | 9 | नोकै | तोकै |
| 106 | 5 | राम | राम. |
| | 8 | यन्दीये | यदीये |
| | 12 | हृस्स्युपायं | हृरस्युपाय |

| पुटी | पंक्तिः | असाधु | साधु |
|---|---|---|---|
| | 19 | अनू | अनु |
| 107 | 15 | त | यत्त |
| 108 | 14 | ऽयौ | ऽसौ |
| | 17 | क्लेविनाशिनीं | क्लेशविनाशिनीं |
| 109 | 18 | वर्षः | वयं |
| 110 | 7 | नरनाथः | नरनाथ ! |
| 111 | 7 | ताद | तादृङ् |
| | 20 | तद्ब्रह्म | तद्ब्रह्म |
| 112 | 11 | शख्यी | शरव्यी |
| 119 | 14 | रत्न | रत्ने |
| 121 | 3 | पृच्छय | पृच्छ्य |
| | 14 | चरम | चरमा |
| 122 | 11 | कितञ्चित् | र्किञ्चित् |
| | 16 | स्वतपत्राणि | स्वातपत्राणि |
| 123 | 1 | प्रत्यक्ष | प्रत्यक्षी |
| | 9 | न्याज | व्याज |
| 124 | 4 | मन्य | मन्त |
| | 7 | विकच | विलस |
| | 10 | मामका | मामिका |
| | 15 | द्वांसु | द्वर्षांसु |
| | 16 | हंस्यभवत्सगेन | हंसस्यभवत्वगेन |
| | 22 | निगात् | निरगात् |
| 125 | 3 | क्न्याशि | क्व्याशि |

| पुटी | पंक्तिः | असाधु | साधु |
|---|---|---|---|
| 126 | 3 | बुद्धो | बुद्धो |
| 128 | 11 | त्विनि | त्विति |
| | 16 | नपतैता | नमतैता |
| | 21 | मेवेन | मोदेन |
| 129 | 6 | मेदेषु | भेदेषु |
| 130 | 3 | चर्ष्यमाण | चर्व्यमाण |
| | 9 | वश | वंश |
| | 14 | सफेषु | शफेषु |
| | 20 | ससेब्य | संसेव्य |
| 131 | 3 | पाहीं | नृपाहीं |
| | 15 | नन | ननः |
| 132 | 3 | मानस | मानसं |
| 133 | 8 | द्वज | द्विज |
| | 13 | चेच्छयते | चेच्छ्यते |
| 134 | 11 | भ्रत्कवै | भुत्कवै |
| 136 | 1 | बेदिनां | वेदिनां |
| | 20 | स्य | स्स |
| 138 | 2 | लोलाक्षिः | लोलाक्षि ! |
| | 9 | न्रुपति | नृपति |
| | 21 | राज्ञीनीतो | राज्ञानीतो |
| | 21 | वर्णीत | वर्णीति |
| 139 | 10 | हृर्षाद्भुत | हृर्षाद्भुत |
| 140 | 10 | जननसक्ष | जननगृहाय |
| | 18 | दिव | दिव |
| 142 | 15 | च्या | चया |

| पुटी | पंक्तिः | असाधु | साधु |
|---|---|---|---|
| | 17 | निसदैः | निनदैः |
| | 17 | ग्ललिता | ग्गलिता |
| | 20 | प्रसाद | प्रसार |
| | 22 | कुर्वलि | कुर्वन्ति |
| 143 | 15 | कांक्षान्त्यहो | कांक्षंत्यहो |
| | 20 | न्याजा | व्याजा |
| 144 | 19 | धरणी | धात्री |
| 145 | 1 | विस्ट | विसृ |
| | 20 | न्योम्नीति | व्योम्नीति |
| | 20 | प्रतिधेन | प्रतिघेन |
| | 22 | एजंन्ते | राजन्ते |
| 146 | 1 | धनो | घनो |
| | 5 | धन | घन |
| | 20 | तरिद | तटिद |
| 147 | 1 | यूथिकाथो | युधिकाथो |
| | 2 | मण्डलाग्रम | मण्डलाग्रं |
| | 9 | संव्ताच | संवृताच |
| | 12 | ह्राच्छौदना | ह्राच्छोदना |
| 148 | 1 | वलाह् | वलाहक |
| | 9 | सन्ध्यस्वह्र्यंददता | सन्ध्यास्वर्घ्यं ददतां |
| | 11 | द्गह्रा | द्गुह्रा |
| | 23 | बिरूद | बिरुदा |
| 149 | 10 | पर | पट |
| | 17 | लगुडैच्छत्रै | लगुडैश्छत्रैः |
| 150 | 13 | भूरण्डी | भूरुण्डी |

| पुटी | पंक्तिः | असाधु | साधु |
|---|---|---|---|
| 151 | 11 | तती | ततो |
| 152 | 5 | माष्ठु | माष्टुं |
| | 11 | पात | पाद |
| | 20 | वशाता | वशात्ता |
| | 22 | साक्ष्य· | साक्ष्य |
| 153 | 14 | सामं | समं |
| | 15 | इत | इन |
| 154 | 7 | चिबुका | चिबुक |
| | 21 | वनीय | वनीप |
| 155 | 12 | लक्ष्मी. | लक्ष्मिः |
| | 15 | हाः | हा ! |
| | 16 | मुक्त्याब्द | मुक्ताब्द |
| 156 | 17 | वकुत्स्थ | ककुत्स्थ |
| 157 | 4 | स्वदा | स्ववदा |
| 158 | 5 | नोरं | नीरं |
| 159 | 2 | न्यब्जम | न्यब्ज |
| | 6 | संकचय्य | संकुचय्य |
| | 15 | पङ्क्तो | पङ्क्ते |
| 160 | 4 | छवास | छ्वास |
| | 12 | क्षत्र | क्षत्र |
| 161 | 13 | क्वा | क्व |
| 163 | 2 | प्रक्ष्त्या | प्रक्ष्यत्या |
| | 3 | कः | का |
| 164 | 10 | तस्मात्तस्मै | तत्तस्मै |
| 165 | 1 | शेम | क्षेम |
| | 14 | भुक्तयै | भुक्त्यै |
| | 17 | पदवीं | पदवी |

| पुटी | पंक्तिः | असाधु | साधु |
|---|---|---|---|
| 168 | 1 | कुरुः | कुरु |
| | 21 | व्रतै | व्र |
| 170 | 2 | तेच्धं | तेऽघं |
| 172 | 2 | मुखैषु | मुखेषु |
| | 11 | में | ने |
| 173 | 2 | नस्यद्य्व | नस्याद्व्य |
| 175 | 13 | घना | धना |
| | 20 | शाम्ता | शान्ता |
| 176 | 3 | सती | सतीं |
| | 17 | शख्या | शरव्या |
| 179 | 10 | दिने | पिने |
| 180 | 7 | जलपवार्थी | जलपवादी |
| | 15 | अगच्छाम | अगच्छम् |
| 182 | 2 | पल | दल |
| | 5 | श्य | श्च |
| | 9 | नात्यै | नान्यै |
| | 12 | वृष्टि | वृष्टिः |
| | 20 | सङ्घषु | संघेषु |
| 183 | 1 | चेलु | चेल |
| | 7 | सत्या | सव्या |
| | 17 | रथ | राय |
| 184 | 2 | स्य | स्स |
| | 7 | घटया | घट्या |
| | 16 | सस्रा | सत्रा |
| 85 | 5 | तरगं | तरळां |
| | 6 | यच्छद्भ्रश्च | यच्छद्भिश्च |
| | 12 | भवन्त | भवन्तं |
| | 16 | एतावदत्त | एतावत्त |